॥ श्रीः ॥

# हिकमत्प्रकाशः ।




श्रीमहादेवदेवविरचितः ।

स च

मुहम्मदपुर-माजरा-ग्रामनिवासि-प० नन्दलालशर्म-
शास्त्रिद्वारा संशोध्य

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९७०, शके १८३५.

# भूमिका।



अयि प्रिय महोदयगण ! यह सर्वसाधारणको अच्छे प्रकारसे विदित ही है कि, अन्य प्राणिमात्रकी अपेक्षा यह मनुष्यशरीर परमात्माने सर्वोत्कृष्ट उत्पन्न किया है और उत्पन्न करके धर्म, अर्थ, काम और मोक्ष इनका साधनभूत इस मनुष्यशरीरके लिये; उस परम कृपालु परमात्माने धन्वंतरि आदि अनेक अवतार धारण करके सहायता की है । और अन्यान्य ऋषि महर्षियोंद्वारा चरक, सुश्रुत आदि ग्रंथ निर्माण करके परम दयालुता प्रकट की है यह भी संपूर्ण अविदित है ऐसा नहीं है, इसलिये इस प्रसंगको छोडकर अब प्रासंगिक कुछ अन्य वृत्त मैं लिखताहूँ;कि—जबसे हमारे पवित्र भारतवर्षमें यवन नृपतियों अर्थात् बादशाहोंका पदारोपण हुआ तबसे उनके संसर्ग करके इस भारतीय प्रजाकी स्थिति अन्यथा ही होगई, अर्थात् दृढ ब्रह्मचर्य और शीत उष्णता आदिकी सहनशीलता शिथिल होनेक कारण कोमलांगी और कोमल बल वीर्य वाली प्रजा होगई । इसी कारणसे चरक, सुश्रुत आदि ग्रंथोंके बलिष्ठ औषधप्रयोग कल्पआदिकोंके सहनेकी भी इस्की शक्ति न रही। इस कालमें देश, काल, बल, वीर्य आदिके वेत्ता महानुभावोंने समयानुसार अनेक ग्रंथ निर्माण करके अपनी परम दयालुताका परिचय दिया है यह सुप्रसिद्ध है। उनमेंसे कईएक विद्वानोंने ऐसा भी कौतुक कियाहै कि, फारसी औषधनामोंसे और रोगआदि नामोंसे ही ग्रंथ निर्मित कियेहैं। उनमेंसे अपूर्व यह एक ग्रंथ "हिक्मतप्रकाश" नामका उदारकीर्ति "श्रीमहादेवदेव" ने निर्मित किया है। चिकित्साशैलीके अतिरिक्त इस अलभ्य ग्रंथकी कविता भी ऐसी उत्तम मनोहर है कि, इसके विचारनेसे ही यथार्थ विदित होसकतीहै हम लिख नहीं सकते। इसमें वर्ग भी फारसीके अलिफ्आदि वर्णाके क्रमसे रक्खे हैं। और बडी खूबी इस ग्रंथकी यह है कि फारसी औषधशब्दोंका निघंटु (कोश)

और चिकित्सा दोनों साथके साथ ही वर्णन किये हैं। विशेष क्या लिखूँ राजा महाराजाओंके सुकुमार शरीरोंकी चिकित्साओंके लिये इसमें वे गुलकंद और शर्बत आदि वर्णन कियेहैं कि, जिनका सेवन करते यह खबर न पड़े कि हम चिकित्सा करारहेहैं या भोग भोगरहेहैं। इन गुणोंके अतिरिक्त एक विशेष यह उत्तम गुण है कि, यूनानी इलाज प्रायः ठंढे होनेपर भी इस ग्रंथके इलाज बहुत ही ठंढे और चित्तको प्रफुल्लित करनेवालेहैं इसमें संदेह नहीं, यह विचारनेसे सकल महोदयोंको विदित ही होजायगा बहुत लिखनेसे कुछ प्रयोजन नहीं।

अब इस ग्रंथकी प्राप्ति होनेके कारण मैं उन महोदयोंको कोटिशः धन्यवाद देताहूं कि, जिनसे मुद्रणसहायतामें पुस्तकरत्न मुझको लब्ध हुए हैं। उनमेंसे एक श्रीयुत रामप्रसादजी ज्योतिषी हेड पण्डित ललितपूर हैं और दूसरे माननीय मुरलीधरजी महोदय हैं, आप लोगोंने इस अलभ्य ग्रन्थके मुद्रणमें पुस्तक प्रदान करके जो सहायता की है, इसलिये फिर भी मैं अनन्त धन्यवाद देताहूं।

इस ग्रन्थको रोहतक मण्डलान्तर्गत-मुहम्मदपुर माजरा ग्रामनिवासी पण्डित नन्दलालजी शर्मा शास्त्रीद्वारा शुद्ध कराय मने अपने "श्रीवेङ्कटेश्वर" स्टीम् प्रेस मुम्बईमें मुद्रितकर प्रकाशित कियाहै। आशाहै कि इस अपूर्व ग्रन्थको ग्रहणकर वैद्य महोदय स्वयं लाभ उठावेंगे और मेरे परिश्रमको सफल करेंगे।

विद्वज्जन कृपाकाक्षी-

**खेमराज श्रीकृष्णदास,**

अध्यक्ष "श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बम्बई.

॥ श्रीः ॥

## हिक्मत्प्रकाशस्याऽकारादिक्रमेण-

# औषधशब्दाऽनुक्रमणिका ।

| शब्द. | पृष्ठांक. |
|---|---|

## ज़ २. [ ज़ाल्-ज़े-ज़्वाद्-ज़ोय् ] ।



## ट. [ टे-वर्गे ] त. [ ते ] [ तोय् ]



## त. [ ते ] [ तोय ]

## म [ मीम ]।



## य. [ ये ]।

इति हिक्मत्प्रकाशस्याऽकारादिक्रमेण, औषधशब्दाऽनुक्रमणिका।

॥ श्रीः ॥

# अथ हिक्मत्प्रकाशः

## प्रथमखण्डः १.

॥ श्रीगणेशाय नमः । श्रीधन्वन्तरये नमः ॥

प्रणम्य परमात्मानं सर्वात्मानं जगद्गुरुम् ॥
यस्य मायाविलासेन भाति नानाविधं जगत् ॥ १ ॥
नृसिंहदेवात्मजबालकृष्णदेवात्मभूर्भेषजकर्म्मदक्षः ॥
देवो महादेव उदारकीर्त्यै हिक्मत्प्रकाशं तनुते विचित्रम् ॥ २ ॥
विद्यैषा हिक्मत प्रोक्ता नज्री[1] अमूलीति सा द्विधा ॥
नज्री वस्तुविमर्शश्च अमूली स्यात्तदुपक्रमः ॥ ३ ॥
प्रभुणा विभुना सर्वं सर्वज्ञेन विकल्पितम् ॥
समीराग्न्यंबुभूमीनां समवायात्समंततः ॥ ४ ॥
पर्यायाः क्रमशश्चैषां हवा आतश आब खाक् ॥
हकीमकुल्ल ईशः स्याद्येनैकत्र निवेशिताः ॥ ५ ॥

दोषस्वरूपादिनिरूपणम् ।

देहे देहभृतां सैव चतुर्भूती सुखेतरे ॥
दोषरूपैः परिणता विदधाति समाऽसमा ॥ ६ ॥
दोषः खिल्त इति प्रोक्तः स चतुर्द्धा निरूप्यते ॥
सौदा सफ्रा तथा बलगम् तुरीयं खून उच्यते ॥ ७ ॥
आहारस्य परीपाके फेनः स्यात्कफसंज्ञकः ॥
सम्यक्पक्वस्तु रुधिरोद्भवकारी रसः स्मृतः ॥ ८ ॥
स केलूस च कैमूस यकृदंगोन्मुखो यदि ॥
खरपाकस्तु पित्तं स्याद्भस्म सौदा समीरितम् ॥ ९ ॥

---

१ नजरी ।

तत्र सौदा धरातत्त्वं रूक्षं शीतं स्वभावतः ॥
पित्तमग्नेः स्वरूपं तु सफरा रूक्षमुष्णकम् ॥ १० ॥
बल्गम् वारिस्वरूपं स्यात्स कफः स्निग्धशीतलः ॥
अस्रं वायुः खून इति स्निग्धोष्णं तेषु तद्वरम् ॥ ११ ॥
तत्संबद्धाऽपरं दोषत्रयं तस्य निराकृतेः ॥
निराकृताः समस्ताः स्युर्यतो रोगनिबर्हणम् ॥ १२ ॥

**टीका**–वायोस्तु प्राणरूपतया जीवस्य स्निग्धोष्णत्वसाहचर्य्यात्तथाभूतरुधिराश्रयत्वाज्जीवप्राणयोरेकाऽऽश्रयत्वेन स्निग्धोष्णत्वं न दुष्यति । यथा–दीपे स्निग्धोष्णः स्नेहः प्रकाशकः किंतु विरुद्धं परिहरति । प्रकुपितो वातो रूक्षः शीत एव ॥

पवनादिधरांतानां चतुर्णां शक्तिवैभवात् ॥
द्रव्येषु प्रकृतिर्जाता तबीअत् सा प्रकीर्त्तिता ॥ १३ ॥
शीतोष्णस्निग्धरूक्षत्वं वीर्य्यद्वयं गुणद्वयात् ॥
चतुर्द्धा भेदमापन्ना चतुर्भिश्च पृथक्तया ॥ १४ ॥
बुरूदत् शीतता प्रोक्ता हरारत् चोष्णता मता ॥
रतूबत् स्निग्धता ज्ञेया यबूसत् रूक्षता स्मृता ॥ १५ ॥
सर्दी गर्मी तरी खुश्की तत्पर्य्याया इमे पुनः ॥
उष्णं हार इति प्रोक्तं शीतं बारिद इत्यपि ॥ १६ ॥
स्निग्धं रतब नाम्ना तु रूक्षं याबिससंज्ञकम् ॥
अपरेऽपि च पर्य्यायाः सर्द खुश्क गरम् तर ॥ १७ ॥
सामानाऽधिकरण्येन द्वंद्वत्वे च द्वयोर्द्वयोः ॥
एवमष्टविधा सा स्यात्पुनर्भेदचतुष्टयात् ॥ १८ ॥
एकद्वित्रिचतुःसंख्यागुणितं यत्र तद्भवेत् ॥
एकं द्वयं च पूर्वासां स दर्जा संप्रकीर्त्तितः ॥ १९ ॥
यत्र द्रव्ये कृशाभासं शीतत्वाद्यणु संभवेत् ॥
न पुनर्व्यक्तिमायाति बदर्जे अव्वल स्मृतम् ॥ २० ॥
व्यक्तं स्याद्यत्र शीतादि ज्ञायते मनुजैः पुनः ॥
भिषग्वर्य्यैर्विभाव्यं तत् दर्जे दोयम ईदृशम् ॥ २१ ॥

व्यक्तं वेद्यं प्रगल्भं च यत्र शीतादिकं भवेत ॥
तत्र त्रिर्गुणितत्वात्तु दर्जे सोयम वस्तुषु ॥ २२ ॥
व्यक्तं वेद्यं प्रौढवैकल्यकारि प्रायो द्रव्ये शैत्यमौष्ण्यादिकं वा ॥
एवं वस्तु ज्ञेयमंशांशविज्ञैरायुर्विद्भिस्तद् बदर्जे चहारम् ॥ २३ ॥

दर्ज्जालक्षणं विशदं निरूप्यते ।

**टीका**—पुरुषव्याघ्रदृष्टांतेन यथा—मृगयाविहारी नरस्तच्चर्म्मनखादिरत्नाऽनवम वस्तु सजिहीर्षु-र्महाटव्या चिरं वस्तु स्ववशीकर्त्तुं च पुनः स्वप्रभावाऽऽविर्भाव च विधातु चतुर्द्धा साहसं तनोति। तत्रादौ तं प्रहर्त्तुं परिकरः प्रथम साहसम् १ । तत्समीपे सम्मुखीकरण द्वितीयं साहसम् २ । तेन साक सगरस्तृतीय साहसम् ३ । तन्निग्रहश्चतुर्थं साहसम् ४ । निग्रहस्त्रिविधः—शमनो निष्कर्षणो नाशनश्च । साहसचतुष्टयसपन्नः पुमान्कार्यसिद्धिं लभते । तथैव । श्रीजगन्मातुर्विभूतिरूपिणी द्रव्यमात्रस्य शक्तिमती प्रकृतिः तबीअत्नाम्नी प्रकटीभूता चतुर्द्धा प्रसृमरा तत्पराक्रमो मृगपुरुषसदृशः मनुजप्रकृतिर्महाटवी तत्र चिर स्थितिः स्वाधीनकरण चोभयत्र सममेव न्यूनाऽधिकदुष्टदोषाऽऽतकस्वरूपो व्याघ्रस्तन्निग्रहः स्पष्ट एव । विंबप्रतिबिम्बभावयोः ततश्च सम्यगारोग्यप्राप्ती रत्नलाभः यशःसमुपपत्तिर्विजयसदृशी एतदुद्देशेन हेतुना कार्यकरणे तदाहोपुरुषिकया मनुजप्रकृत्यटव्यामतःप्रवृत्तिलक्षणा गतिः प्रथमसाहसतुल्या स दर्जा अव्वल स्मृतः १ । एवमेवोत्तरोत्तरमेधमानांतःप्रवृत्तिर्द्विगुणा गतिः दर्जा दोयम् २ । त्रिगुणा चेत दर्जा सोयम् ३ । चतुर्गुणा चेत दर्जा चहारम् ४ । इत्यवधिः । कायम् तबीअत मिजाज स्वभावपर्यायः—इति व्याख्या ॥

पुनः प्रकृतमनुसरति ।

मातदिल् लक्षणं ख्यातं समानबलमल्लवत ॥
अयतद्दाल समानत्वं यत्र सर्वात्मना भवेत् ॥
तद् द्रव्यं मोतदिल् प्रोक्तमेतन्मतविशारदैः ॥ २४
यत्रास्ते शिशिरत्वादि चतुर्गुणमखंडितम् ॥
त्रैगुण्यं रूक्षतायास्तु तच्चोपविषमीरितम् ॥ २५ ॥
तद्यथा फणिफेनादिस्नुह्यर्कक्षीरमित्यपि ॥
चतुर्गुणं तु शैत्यादिरूक्षत्वं तावदेव हि ॥ २६ ॥
यत्रास्ति तद्विषं ज्ञेयं वत्सनाभश्च संखिया ॥
पूर्वं स्यात्तु दवासम्मी सम्मसुत्लक परं स्मृतम् ॥ २७ ॥

तबीअत् कैफियत कुव्वत् खासियत् च चतुष्टयम् ॥
निखिलं द्रव्यगं ज्ञेयमल्पं किं वाप्यनल्पकम् ॥ २८ ॥
प्राणिप्रकृतिसंयोगाद्यत्प्रकृत्यंतरं भवेत ॥
तद्विगाह्य पुनर्यत्स्यात कैफियत् सा प्रकीर्त्तिता ॥ २९ ॥
कुव्वत् शक्तेस्तु पर्यायो विविधा सा भवेदिह ॥
स्तंभनी रेचनीत्यादिभेदास्तासां समासतः ॥ ३० ॥
स्तंभनी त्रिविधा शक्तिः काबिज् हाबिस् मुमासिक ॥
इम्साक कब्ज हब्स कर्माण्यासां विदुर्बुधाः ॥ ३१ ॥
मलरोधकरी पूर्वा रजःस्वेदाऽसृजां परा ॥
रेतःस्तंभे तृतीया स्याद्रेचनी तु द्विधा मता ॥ ३२ ॥
एका मुदिर इदरार् कर्त्री शुक्राऽऽर्त्तवस्य च ॥
स्वेदमूत्रप्रवृत्तौ च सैव प्रोक्ता भिषग्वरैः ॥ ३३ ॥
अर्क स्वेदो बोल मूत्रं हैज आर्तवमीरितम् ॥
मनीः शुक्रं समुद्दिष्टमेतन्मतविचक्षणैः ॥ ३४ ॥

तत्र शुक्रत्रैविध्यं यथा-

मनीः प्रजोत्पादनशक्तियुक्ता विलोकनाऽऽलिंगनतोऽगनायाः ॥
क्लेदः स्मरापायकरो मज़ी स्यान्निर्हारकाले स्खलनं वदी स्यात॥ ३५॥
अपरा मुसहिल्नाम्नी इसहाल् रेचनं विशः ॥
नौम निद्रा समाख्याता मुनव्विम् तद्विधायिनी ॥ ३६ ॥
परीपाकस्तु दोषाणां नुज्जिज् नाम समीरितः ॥
तद्विधा न क्षमा या सा मुंजिज् संज्ञेति कथ्यते ॥ ३७ ॥
सुकुर् मदस्य पर्य्यायस्तत्कर्त्री या पटुर्भवेत् ॥
शक्तिर्मुसक्किर् सा प्रोक्ता प्रतीचीवैद्यकोविदैः ॥ ३८ ॥
कय वांतिः पुराविद्भिर्गदिता तत्करी तु या ॥
मुकव्वी शक्तिराख्याता द्रव्येष्वायुर्विदांवरैः ॥ ३९ ॥

तफ्तीह स्रोतसां रोधं विमुक्तिस्तत्करी तु या ॥
मुफत्तिह् शक्तिरित्येषा सुद्दा रोधः प्रकीर्त्तितः ॥ ४० ॥
नऊज इनआज् चैव दीपनं पुष्पधन्वनः ॥
तत्प्रयोजनकर्तृत्वे मुनइज् समुदाहृता ॥ ४१ ॥
वाह ओजः समुद्दिष्टं तत्पटुत्वकरी तु या ॥
शक्तिरुद्दीपनांतःस्था मुब्बही सा निगद्यते ॥ ४२ ॥
वर्म औराम शोथः स्यात्तस्य तह्लील संक्षयः ॥
मुहल्लिल् शक्तिरित्येषा तत्कृते प्रतिपादिता ॥ ४३ ॥
संशोध्य समतांकार्य्यं सा लतीफ इति स्मृता ॥
शक्तिर्मुलत्तिफ ख्याता हिता दोषचतुष्टये ॥ ४४ ॥
शैथिल्यं खदर प्रोक्तं चेष्टायां वर्म्मणः सतः ॥
विधीयते यया सा च मुखद्दिर् शक्तिरुच्यते ॥ ४५ ॥
गश् वैकल्यं समादिष्टमातंकस्याऽपि जीविनः ॥
विधीयते यया शक्तिर्मुगश्शी साऽभिधीयते ॥ ४६ ॥
शिरोहृद्यकृदाहुश्च पक्वाशय इति क्रमात् ॥
दिमाग़ दिल् जिगर् मेदा एतदंगचतुष्टयम् ॥ ४७ ॥
आजाय् रईस इत्युक्तं श्रेष्ठं देहे शरीरिणाम् ॥
यथा कव्वी बलिष्ठं स्यात् मुकव्वी सा प्रशस्यते ॥ ४८ ॥
तस्कीन वेदनाशांतिस्तद्विधात्री तु या भवेत् ॥
शक्तिर्मुस्किन सा प्रोक्ता चिकित्सातत्परैर्नृभिः ॥ ४९ ॥
निर्म्रिराक्षतसंधानविधानचतुरा तु या ॥
मुदम्मिल् शक्तिरुद्दिष्टा द्रव्येषु प्रभुनिर्मिता ॥ ५० ॥
तलीन कोष्ठमृदुता तत्कर्म्मनिपुणा तु या ॥
विबन्धघ्नी मुलय्यन् सा देहस्वास्थ्यकरी सदा ॥ ५१ ॥
खुशी फर्हत् प्रसादः स्यान्मनसो देहपाटवम् ॥
उभयं विदधात्येषा मुफर्रह् सा प्रकीर्तिता ॥ ५२ ॥

क्षताद्व्रणाद्वा पूयादि निःसारयति कांतिदा ॥
मुजल्ली व्याहृता सा हि शक्तिनिर्णयकारिभिः ॥ ५३ ॥
क्षुद्बोध इश्तिहा नाम तदुद्दीपनकारिणी ॥
शक्तिः सा मुस्तही ज्ञेया द्रव्यतत्त्वविचारिभिः ॥ ५४ ॥
क्षतं कुरूहा समादिष्टं व्रणे स्वांगे च यत्कृतम् ॥
मुकरह् शक्तिरुद्दिष्टा तत्करी चाऽपि शीघ्रकृत् ॥ ५५ ॥
क्लेदसंशोषणादित्वात्सौषिर्य्यं[1] वितनोति या ॥
मुजफ्फिफ् शक्तिरित्येषा कथिता सूक्ष्मदर्शिभिः ॥ ५६ ॥
अनुपानविशेषेणाऽनेकाऽऽतंकघ्नता तु या ॥
खासियत् सा विनिर्दिष्टा द्रव्ये द्रव्यविशारदैः ॥ ५७ ॥

इति सक्षेपाद्दोपस्वरूपनिरूपण द्रव्यगतचतुष्पदार्थाख्यानं च समाप्तम् ।

---

अथ मूत्रपरीक्षा ।

दोषैराक्रांतदेहस्य प्रतिकर्तुं रुजां चयम् ॥
मूत्रनाडीपरीक्षा तु प्रथमं परिभाष्यते ॥ १ ॥
मरीज् बीमार रोगी स्यात्तत्परीक्षा द्विधैव हि ॥
शनासी नब्ज कारूर नाडीमूत्रस्य सा स्मृता ॥ २ ॥
पारोक्ष्यादवरा पूर्वा वरा सामक्ष्यतः परा ॥
चतुर्वर्णं चतुर्भिः स्याद्दोषैर्मूत्रं तु रोगिणः ॥ ३ ॥
सफेद अब्वियज् श्वेतं स्याह अस्वद मेचकम् ॥
जर्द अस्फर पीतं स्यात् सुर्ख अहूमर लोहितम् ॥ ४ ॥
सितमच्छं च बहुलं मूत्रं शैत्यविशेषतः ॥
शुभ्रं सांद्रं कफोद्रेकादसांद्रं दोषपाकतः ॥ ५ ॥
अवदातं घनं चाऽपि पिच्छलं श्लेष्मदोषतः ॥
उपायो गदितो वैद्यैस्तत्र मूत्रविरेचनम् ॥ ६ ॥

---

१ सौषिर्यं तु जवीफ इत्यर्थः ।

असितं मलिनं वातकोपवैकृत्यसूचकम् ॥
सौदा विकृतिजं चाऽपि परिज्ञातं भिषग्वरैः ॥ ७ ॥
श्यामलं घनविच्छिन्नं सौदा—कोपेन संभवेत् ॥
सब्ज अजखर् पालाशं भवेन्मूत्रं विषाशिनः ॥ ८ ॥
श्यामं सांद्रं च यन्मूत्रमूष्मणा दग्धदोषताम् ॥
प्रकटीकुरुते दोषविचारे भिषजं प्रति ॥ ९ ॥
शष्कस्य यवसस्येव नीरं यद्भावनाभवम् ॥
इषत्पीतं हि मंदाग्ने रंगत्स्वैरी उदाहृतः ॥ १० ॥
फलपूरत्वगाभासं तीक्ष्णाग्नेरुपजायते ॥
तुरंजी उन्नजी चेति नाम्ना वर्णः प्रकीर्त्तितः ॥ ११ ॥
ज्वलनं ज्वालभं यत्तु रक्तं पीतं च मेचकम् ॥
स वर्ण आतशी नारी—प्रोक्तस्तस्य परीक्षकैः ॥ १२ ॥
तत्रोष्मणा खरत्वं तु दोषाणां जातमुच्यते ॥
एहतराक् स विज्ञेयः सोख्तगी हिर्कत स्मृता ॥ १३ ॥
मोहृतरिक् दग्धकर्त्ता स्यादेष शब्दस्थितेर्विधिः ॥
जाफ़रानी कुंकुमाभमत्युष्णज्वारिणो भवेत् ॥ १४ ॥
ऐरावतफलाभासो नारंजी वर्ण उच्यते ॥
तत्सादृश्यं भवेन्मूत्रं रक्तपित्तविकारिणः ॥ १५ ॥
वर्दी गुलाबी पर्यायौ पाटलं वदतो गुणम् ॥
असहब् किंचिदेतस्मादवदातः स्मृतो बुधैः ॥ १६ ॥
वर्णद्वयाऽनुगं मूत्रं जायते रक्तवेगतः ॥
कानी त्वत्यंतशोणः स्याद्दाडिमीकुसुमादपि ॥ १७ ॥
तत्राऽस्रप्राज्यभावे तु शोधनं शस्तमीरितम् ॥
अक्तम् यावकवर्णं स्याद्दग्धाऽसृग्लक्षणं वदेत् ॥ १८ ॥
अश्करी रंगगुल्लाला रक्तकोपज्वरे भवेत् ॥
समासान्मुख्यवर्णानां व्यंजनं समुदाहृतम् ॥ १९ ॥

इति मूत्रपरीक्षा ।

## अथ नाडीपरीक्षा ।

हैवानी चैव नफ़्सानी रूह-द्वयमुदाहृतम् ॥
हृदयस्थं शिरःस्थं च देहिदेहसुखावहम् ॥ १ ॥
तत्संगतास्तु या नाड्यः शिरियान् असब क्रमात् ॥
हृत्पद्मे यास्तु संलग्नाः समंतात्प्रस्फुरन्ति ताः ॥ २ ॥
शिरोन्तर्भागसंबद्धास्ताभिः श्रेष्ठादिकं भवेत् ॥
श्रेष्ठो जीवनिवासो हृद्राज्ञो राज्यासनं यथा ॥ ३ ॥
तद्भवा धमनी मुख्या मनुष्यमणिबन्धगा ॥
परीक्षणीया भिषजा ह्यंगुलीभिश्चतसृभिः ॥ ४ ॥
यथोक्तगतिपर्य्यायाः यावत्स्युः सप्तविंशतिः ॥
तावत्समाहितमतः प्रेक्ष्या तस्या गतिः पुरः ॥ ५ ॥
गिज़ाल मृगपर्य्यायस्तद्वदुत्प्लुत्य गच्छति ॥
गिज़ाली गतिराख्याता पित्तकोपविकारतः ॥ ६ ॥
तरंगनाम मौज स्यात् मौजी गतिरितीरिता ॥
निवेदयति वर्ष्मस्थं वायोरूष्माणमेव सा ॥ ७ ॥
दूद स्यात्क्रिमिपर्यायो दूदी तस्य गतिः स्मृता ॥
श्लेष्मणः संचयं चामं प्रकुटीकुरुते हि सा ॥ ८ ॥
नुमल् पिपीलिका मोर नुमली तद्गतिः स्मृता ॥
यस्य नाडी तथा गच्छेन्मृतिं तस्याऽऽशु निर्दिशेत् ॥ ९ ॥
असिपत्रस्य पर्यायो मिन्शार इति कीर्त्तितः ॥
यथा स्यात्तु क्रमः काष्ठे मिन्शारी सा गतिर्भवेत् ॥ १० ॥
तद्गतिं धमनी धत्ते बाह्यांतःशोथरोगिणः ॥
जुमबुलफार–नाम्नी या गतिर्मूषकपुच्छवत् ॥ ११ ॥
पित्तश्लेष्मप्रकोपेन धमन्याः सम्भवेत्किल ॥
माली शलाकासदृशी सूक्ष्मा धीरा बलात्ययात् ॥ १२ ॥
गत्याघातद्वयं यस्याधस्तादंगुलेर्भवेत् ॥
जुलूफित्तत् सा स्मृता पित्तश्लेष्मदग्धत्वबोधिनी ॥ १३ ॥

मुर्त्तइद् प्रस्फुरन्ती या गतिः कोष्ठस्य रूक्षताम् ॥
विड्ग्रहत्वं च सौदावी विकाराञ्ज्ञापयत्यपि ॥ १४ ॥
इर्तिशा कम्पपर्य्यायस्तद्विशिष्टा तु या भवेत् ॥
मुर्त्तदश् नाम सा ज्ञेया सफ्रा–सौदा–विकारयुक् ॥ १५ ॥
इम्तिला पूतिरुद्दिष्टाऽस्त्रजोऽस्यां मुम्तिली तु सा ॥
तमःकफादधोगा या मुनूकविज् सा प्रकीर्त्तिता ॥ १६ ॥
ऊर्द्ध्वमुत्प्लुत्य या गच्छेत्किंचिन्मायुप्रकोपतः ॥
शाहकूबुलंद सा ख्याता धमनी संपरीक्षकैः ॥ १७ ॥
चतुरंगुलसंस्थानादपि दीर्घा तवील सा ॥
दराज इति पर्यायस्तस्या एव निपातितः ॥ १८ ॥
परिमाणा न्यूनरूपा सा कसीर समीरिता ॥
अमीक निम्नगा या च अरीजअ धमनी स्मृता ॥ १९ ॥
यांया गतिस्तु दोषाणां धत्ते प्राज्यत्वहीनतः ॥
गल्बे कसूर अर्काब्लात् तारतम्येन निर्द्दिशेत् ॥ २० ॥
वाफिउल्बस्त निर्दोषा स्वस्थस्य परिकीर्त्तिता ॥
इति संक्षेपतो नाडीपरीक्षा कथिता बुधैः ॥ २१ ॥

इति नाडीपरीक्षा।

इति प्रथमः खण्डः ॥ १ ॥

# अथ द्वितीयखंडप्रारंभः।

यथावन्नामरूपाणां द्रव्याणां गुणवर्णनम् ॥
बयान मुफ्रिदात् ज्ञेयं संक्षेपेण निगद्यते ॥ १ ॥
मुफ्रिद् मुरक्किब द्वे स्तः संज्ञे सर्वौषधीगते ॥
केवलं स्वस्वरूपस्थं तन्–मुफ्रिद उदाहृतम् ॥ २ ॥
क्षोदावलेहप्रभृति तन्–मुरक्किब–संज्ञकम् ॥
गुणाऽभिधान एतस्य पश्चाद्वर्णक्रमाद्गुणः ॥ ३ ॥

१ केवलशब्दोऽत्रैकशब्दपर्य्यायः ।

# अथ वर्गः प्रथमः १.

## रदीफे अलिफ ।

अवरेशम्–रेशम । कौशेयम् । पाट ॥
स्निग्धोष्णमेकगुणितं मौतदिल् कस्यचिन्मते ॥
मुकव्वी चतुरंगस्य_हशो देहस्य पुष्टिदम् ॥ १ ॥
शर्बत् ग्रहणमात्रायाः पर्य्यायः संप्रकीर्त्तितः ॥
यंकदिरम् स्यादतोऽस्यास्तु लक्षणं परिचक्ष्यते ॥ २ ॥
आचतुर्गुंजनिष्कः स्याद्दिरम् मात्राऽऽर्यसंमता ॥
मुकारिज् प्रकीर्त्तितं योग्यमवलेहादिसाधने ॥ ३ ॥
औषधाद्दीनवाऽऽकृष्टिः सलाह इति कीर्त्तिता ॥
तत्कर्तृत्वविशिष्टं स्याद्यत्नं मुस्लिह–संज्ञकम् ॥ ४ ॥
तुब्बउत्रज–संसिद्धमौषधं चास्य तद्भवेत् ॥ ५ ॥

टीका–'मुकव्वी–चतुरंगस्ये' ति द्राविणप्रदमंगचतुष्टयस्थानाऽभिमानिनो रूह–चतुष्टयस्य 'हवानी नफ़्सानी' ति हृदयस्थं शिरस्थं च रूहयुग्म नाडीपरीक्षादौ प्रागुक्तमेव ॥

रूहे तृतीया तबईतिनाम्नी पक्वाशयस्था निजवर्गमित्रम् ॥
ततस्तुरीया जिगर–स्थिता या सा मादनी धातुविवृद्धिमार्गः ॥ ६ ॥

टीका–रूहशब्देन कश्चिदनिर्वचनीयश्चतुर्विधश्चिच्छक्तिविशेषः ॥

आबनूस् उत्तमं कृष्णं श्लक्ष्णं काशं क्रियाक्षमम् ॥
रूक्षोष्णमेकगुणितं शतपुष्पाजलेन चेत् ॥ ७ ॥
घृष्टमंजनतो हंति रजन्यंधत्वपुष्पकम् ॥

टीका–श्लक्ष्णम्–अम्लस । रात्र्यांध्य–शबकोरी । नेत्रपुष्पं गुलचश्म ॥

अन्तर्भावोऽत्र विज्ञेयो ह्रस्वयोर्व्वोर्भिषग्वरैः ॥ ८ ॥

टीका–अत्राऽवर्णे ह्रस्वेकारोकारयोरित्यर्थः ॥

उबहुल्–वारसरसरो । वकोही । ह्रीवेरम् । ह्रौबेर ॥
सरलस्य फलं प्रोक्तं शैलोद्भूतस्य कोविदैः ॥
ह्रीबेरं रूक्षमुष्णं स्याद्द्विगुणं पीनमेचकम् ॥ ९ ॥

टीका–फर्बह–पीतपर्यायः ।

---

१–४॥ माशा ।

शस्तं तत्तिलतैलेन पाचितं लोहभाजने ॥
यावत्स्नेहः स कृष्णः स्यात्ततः कोष्णस्तु कर्णयोः ॥ १० ॥
निक्षिप्तो गौरवं हंति रुजं चाऽपि सुदारुणाम् ॥
स तुर्यगुंजो निष्कोऽस्य मात्रा मिस्काल उच्यते ॥ ११ ॥
मिस्काल २ द्वितयं क्षणं दश १० मिस्काल माक्षिकम् ॥
मिस्काल ३ त्रयं गव्येन सर्पिषा परियोजितम् ॥ १२ ॥
भक्षितं रजसः स्त्रीणां मृतगर्भप्रवर्त्तकम् ॥
तथैव तच्च व्यंगघ्नं कथितं भिषजां वरैः ॥ १३ ॥
भर्जरत् क्षयपर्य्यायः सुकरं स्यान्न सुजार्रैव ॥
यकृतस्तूष्णबाहुल्यादधिकं तत्तथा भवेत् ॥ १४ ॥
समालोच्यागदंकारैस्तद्बाधाशमने पटुः ॥
वचा मानुषभक्ष्या स्याद्गरवज इतीरिता ॥ १५ ॥
तस्य प्रतिनिधिर्दारचीनी वैद्यैः प्रकीर्तिता ॥ १६ ॥

टीका—लोहपात्रम् जरुफ आहनी । शीरगरम्–कोष्णः । गिरानी उजनैन यानें हरदुगोश–कर्णौ । उजन्–कर्णः । गोश् फारसी कर्णः । गिरानी–गौरवम् ॥

इबल–शुतर । क्रमेलकः ।

भस्मनासास्रुताऽस्रं हि दासेरकतनूरुहाम् ॥
नस्यतो हंति विपदं श्रीनृसिंहस्मृतिर्यथा ॥ १७ ॥

आनार–सुरुब । शीशा ।

नागो रूक्षश्च शिशिरो द्विगुणं भस्म तद्भवम् ॥
सूक्ष्मं क्षते विनिक्षिप्तं संधिसंधानपूरकम् ॥ १८ ॥
मारूफ् पर्य्याय आदिष्टो बदल् प्रतिनिधिः स्मृतः ॥
स्रोतोंजनं तदस्योक्तं कर्म्मण्यस्मिन्भिषग्वरैः ॥ १९ ॥

उत्रज–तुरंज–बीजपूर ।

फलपूरफलत्वक्स्याद्रूक्षोष्णा च गुणद्वयम् ॥
दु २ मिस्काल–मितं चूर्णमस्याः क्षौद्रेण लेहयेत् ॥ २० ॥

तुर्य—मिस्काल—मानेन सर्ववाताऽऽमयापहम् ॥
मुख्यतुर्यांगबलदं सर्वशीतज्वरांतकम् ॥ २१ ॥

टीका—तोम् मजा रसपर्य्यायौ ते च यथा—हुल्व १ हामिज २ मालह ३ मुर्र ४ हाद्दह ५ अफस ६ तन्नामांतराणि च—शीरी १ तुर्श २ शीर ३ तल्ख ४ तेज ५ जमुर्रद ६॥

इति स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥
क्रमेण षड्रसाः प्रोक्ता द्रव्याण्याश्रित्य संस्थिताः ॥ २२ ॥

टीका—तिक्तो निंबादिषु । कटुः कणादिषु ॥

पुनःप्रकृतमनुसरति ।

आंतराम्लं तदीयं तु हिमं रूक्षं गुणद्वयम् ॥
लेपादशनवश्चाऽपि सिध्मकंडव्रणाऽपहम् ॥ २३ ॥

टीका—सिध्मा—कलफ छीप वनरफ भाषायाम् । जर्व खारिश—कंडूः ॥

तदीयो मधुरः क्वाथः शर्बत् पर्य्याय उच्यते ॥
निहंति पित्तरक्तोत्थं हृद्रोगं पित्तमेव च ॥ २४ ॥

टीका—खफकान हौलदिल् हृद्रोगः ॥

क्षुत्कृदुन्मादजिच्चापि हृदो बलविवर्द्धनम् ॥
अस्य प्रतिनिधिः प्रोक्तो निंबूकं दर्पहृन्मधु ॥ २५ ॥

इस्मिद्—सुरमा स्याह । स्रोतोंजनं कृष्णम् ।

हिममेकगुणं प्रोक्तं रूक्षं तु द्विगुणं स्मृतम् ॥
अंजितं चक्षुषोः स्रावं हंति सर्वाऽक्षिरोगजित ॥ २६ ॥

टीका—अयनैन हरदु २ चश्म-चक्षुर्द्वयम् । अयन चश्म चक्षुः ॥

इज्जास उज्जास आलू । आलुकम् । आड्डू इति लोके ।

अम्लं तु द्विगुणं शीतं रूक्षं तृड्वेगवारणम् ॥
विरेकघ्नं तु यत्स्वादु स्निग्धोष्णं प्रथमे गुणे ॥ २७ ॥

आतशातिश्नगी—उदन्या पिपासेत्यर्थः ।

मायूष्मरेक्कत्किंचित्स्वाद्वम्लं मधुरं समम् ॥
कोष्ठांतर्दाहशमनं गदितं गुणवेदिभिः ॥ २८ ॥

टीका—इलत्तिहा व सोजश दाहपर्यायौ ॥

---

१ कटु । २ मातदिल्—इत्यर्थः ।

सिर्का सन्धानभेदो यो निर्य्यासोऽस्याऽमुना युतः ॥
लेपेन ग्रंथिनिचयं लयं प्रापयते ध्रुवम् ॥ २९ ॥

टीका-निर्यासः समग ॥

मस्तकांतःस्नुतश्लेष्मवारि नज़्ला प्रकीर्तितः ॥
स द्विजाऽक्षिश्रुतिगतस्तत्तदंगविघातकृत् ॥ ३० ॥
गंडूषो विहितश्चात्र ह्येतत्पत्रैः शृतांभसा ॥
निषूदनार्थं दोषस्य तत्कृतस्य गदांतकैः ॥ ३१ ॥

टीका-चिरतनप्रतिश्यायोऽपि ताल्वतीर्णश्चेद्दननाशनः। कर्णगतोबाधिर्यकृत।दृङ्निपततितो दृष्ट्यावरणकारकः। नजूल्माय, मोतियाबिंद इति लोके । बाधिर्य करीगोश। लुहात तालु मज्मजा । गर्गरा-गण्डूषः । बरग–पत्रपर्यायः ॥

अधिकं दोषजननं शिरसस्तत्फलं भवेत् ॥
आदीनवघ्न एतस्य गुलकंद उदाहृतः ॥ ३२ ॥
विरेकविषये त्वस्याऽम्लिकाप्रतिनिधिः स्मृतः ॥ ३३ ॥

टीका-अंखशा उल्वकर–सुरंगीनगाव–गोमयम् ॥

लेपाच्छोथहरं कामं जंघामूलस्य सत्वरम् ॥
श्रुतिमूलभवं चाऽपि क्षणात्क्षैण्यं नयेददः ॥ ३४ ॥
उदरी च सुधायुक्तं लेपयेदुदरोपरि ॥
आतपे संस्थितस्तावच्छुष्येत्तद्गदनाशनः ॥ ३५ ॥

टीका-जंघामूले-मुगाबिन । कर्णपृष्ठाऽधोभाग -खलफ उजनैन इति । इस्तिस्का-उदरवृद्धिः ॥

स त्रिधाऽभिहितो वैद्यैः लह्मी तब्ली जकी तथा ॥
आद्यः साध्यो निगदितो मुखपाण्यंघ्रिशोथयुक् ॥ ३६ ॥
द्वितीयो दुंदुभिनिभाऽऽनद्धो दररवी भवेत् ॥
स याप्योंत्यस्तु नितरामसाध्यो दृतिसन्निभः ॥ ३७ ॥

टीका-मुस्तस्की-तद्वान्नरः । नूरा सुधा-चूना । दृतिः मश्क । आजानुल्फार-मर्ज्जोशः मर्जगोशः मरुवा । मकारवर्गे विशद वक्ष्यते ॥

अजखरः–खलालमामूमून । रोहिषं तृणम् । गंधेल घास ॥

---

१ अरबी । २ फारसी ।

शोणं सूक्ष्मं च सुरभि प्रशस्तं सर्वकर्म्मसु ॥
रूक्षोष्णमश्मरीघ्नं स्याद्रोहिषं प्रथमे गुणे ॥ ३८ ॥
प्रवर्तकं च सपदि मूत्रस्य रजसस्तथा ॥
लयकृद्वातरोगाणां वृक्कयोरहितं भृशम् ॥ ३९ ॥
अमुष्याऽऽदीनवहरो गुलाब समुदाहृतः ॥
भूनिंबः स्यात्प्रतिनिधिर्मात्रा मिस्काल-मानतः ॥ ४० ॥

**टीका**—सूक्ष्मम्—बारीक। सुरभि—खुशबू। संगमसाना—अश्मरी। मूत्रम्-कमीरीज। आर्तवं—तमूस। वृक्कौ—गुर्दे। कसबुज्जरीरा—भूनिंबः॥

अर्कांकिया--नशजुलअनकबूतः।

ऊर्णनाभस्य धवलं गृहं सूक्ष्मं विचूर्णितम् ॥
क्षते क्षतजसंरोधं निक्षिप्तं तनुते द्रुतम् ॥ ४१ ॥
सिर्काऽभिधे द्रवे पिष्टं लेपाद्विस्फोटनाशनम् ॥ ४२ ॥
मषीमिश्राऽथ तद्वर्त्तिस्ताम्रचूडांडजद्रवैः ॥
मिश्रिताप्यथ वा न्यस्ता रुआफ द्रुतिनाशिनी ॥ ४३ ॥

**टीका**—क्षतं जराहत् शमशेर—नामकनिर्स्त्रिशादीनां विस्फोटाः। दमामील वर्त्तिः। फतीला मषी स्याही दावात। ताम्रचूडाडद्रवः आबबैजेमुर्ग रुआफ। नासाऽस्रम्। नासिका अनफ बीनी॥

उरुज विरंज शालितंडुलः।

रूक्षो हिमश्चैकगुणः समः स्यात्कस्यचिन्मते ॥
कोष्ठमार्दवकृच्चापि शस्तः सूक्ष्मः सितोऽनवः ॥ ४४ ॥
कांतिपुष्टिकरश्चैव न हितः शूलिने भृशम् ॥
श्लेष्मलाय च दर्पघ्नं सिताक्षीरं घृतं विदुः ॥ ४५ ॥

**टीका**—रूक्षत्वात् काबिज-शक्तिमान्।

आजाददरख्त दरख्तनाहक। पिचुमंदः। नींब ॥
शीतेतरो द्विगुणितं रूक्षस्त्रिगुणितं तथा ॥
त्वगस्य स्रोतसां रोधहरी असब सारदा ॥ ४६ ॥

**टीका**—त्वक् पोस्त। असब शिरःसंबद्धाश्चेष्टावाहिन्यो धमन्यः॥

---

१ वक्कल निर्यास। २ तलवारका व्रण।

क्वाथोऽस्य पत्रसंभूतः क्षालनात्केशकृष्णताम् ॥
निरंतरं विधत्तेऽथ शूलघ्नो माक्षिकान्वितः ॥ ४७ ॥
कल्कोऽस्य मारिचैः पीतः कंडूघ्नः पिडिकापहः ॥ ४८ ॥

**टीका**–शूल कूलिंज । अस्फीदा जुल्रिसास् सुपेदा काशगरी ॥

शस्तो विशुद्धः श्वेतश्च सुरभी रूक्षशीतलः ॥
त्रिगुणं द्विगुणं चाऽपि क्षालितः शीतवारिणा ॥ ४९ ॥
सितोपलेन संयुक्तो नेत्रयोरंजितो नृभिः ॥
दाहकंडूजलस्रावनाशनः शोधनः परम् ॥ ५० ॥

**टीका**–सितोपलः नवातात मिश्री ॥

किंच–मोमकाफूरी ।

रोगन्गुल् सूफेदा त्रिभिरमीभिः समैः मर्हम् ॥
नामाऽगदः शस्त्रादिक्षतेषु शिरोव्रणेषु च हितोऽभिहितः ॥५१॥

आसारून तगर ।

मूलं तृणविशेषस्य रूक्षोष्णं त्रिगुणं स्मृतम् ॥
सुगंधि ग्रंथिलं शस्तं तनुनाऽतनुपाचकम् ॥ ५२ ॥
शोथादीनां लयकृद्विस्फोटादीनां च पाककृत ॥
मात्रा दिरम मिस्कॉलाऽवधिरेतस्य कीर्तिता ॥ ५३ ॥
मुस्लिह् मबीज संप्रोक्ता ह्यनेके बदल स्मृताः ॥

ते च यथा ।

तन्मात्राऽर्द्धप्रमाणेन वचाकर्चूरनागरम् ॥ ५४ ॥

**टीका**–जरंबाद कर्चूरः जंजुबील नागर वा षडंशपरिमितो हमामा भेषजविशेषः । किर्दमाना या हब्बवलसा या निस्फवजन खूलिंजी-इत्येते प्रतिनिधयः कार्य्यविशेषपराः लेपेन शक्तिः सलावत् विहाल याने सरतीसियर्ज प्लीहः पारुष्य तापतिल्ली तिगदः प्रथितः शक्तिः मुफात्तिह सुद्दा मुसक्किन् इरकुन्निसा गृध्रसी रांघण नामाऽऽमयस्तद्वेदनानाशन च । वजुल्वरक् दर्दसुरीन-कटिनितवजघनपीडातन्निर्बर्हण च ।

---

१ अरबी । २ फारसी । ३ मासा ४॥ । ४ मासा १॥ । ५ मुनक्का । ६ यकृच्छोथनाशनोऽस्य क्वाथः । ७ कुलीजन ।

विकारान् शैत्यसंभूतान् शिरोबद्धशिराभवान् ॥
अशनाल्लेपनाद्धंति नीहारमिव भास्करः ॥ ५५ ॥

टीका--विकार इल्लत् शिरोबद्धशिराशैत्य वनूदत असवानी ( ज्ञानतन्तुः )।

मिस्काल त्रितयं चूर्णं माउल्असल–संयुतम् ॥
सांद्रश्लेष्मविरेकाऽर्थं हितं प्रोक्तं क्रियापरैः ॥ ५६ ॥
याने वराय इसहाल् वास्ते दातस्वलामूलजुज् ॥
मायुल्असल उष्णांभःक्षौद्रसंयोगसाधितम् ॥
प्रवर्तकं च मूत्रस्य रजसश्च निगद्यते ॥ ५७ ॥

अन्यच्च ।

पिष्टं गोपयसा वस्तौ जघने च प्रलेपनात् ॥
रेतःस्तंभकरं चाऽपि कुसुमेषु प्रदीपनम् ॥
फुफ्फुसस्य स्मृतं वैद्यैर्भूयिष्ठं दोषकारकम् ॥ ५८ ॥

टीका--फुफ्फुस शश फेफडा भाषायाम् ॥

उस्तूखदूस शाहसफरम् पूसफुलखाह पुष्पविशेषः–।

उष्णमेकगुणं रूक्षं द्विगुणं प्रकृतौ स्मृतम् ॥
शक्तिर्मुलत्तिफ प्रोक्ता मुफत्तिह् मुसहिल् तथा ॥ ५९ ॥
सौदा दोषस्य नितरां मुकव्वीदिल् मुफर्रह ॥
शस्तं रक्तं मनाक्किंचित्पालाशं तिक्तकं रसे ॥ ६० ॥
दिरमद्वयमेतस्य मात्रा वा दिरम–त्रयम् ॥ ३ ॥
क्वाथे हफ्त ७ दिरम् प्रोक्ता तबीख् मतबूखनामनि ॥६१॥

टीका--जोशांदा इति च ॥

समगअरबी तु दर्पघ्नः कतीराण्यऽथवा भवेत् ॥
हमामा वारजद् वाऽपि मुकल वा या शिकंजवी ॥ ६२ ॥
बदल फसालीयूनऽस्य अफतीमून् कार्वियाऽथवा ॥
निर्दिष्टः कुशलैर्नूनं यथास्थानं भिषग्वरैः ॥ ६३ ॥

---

१ तोडदेनेवाला । २ झाडालनेवाला । ३ दिरम ४॥ मासाभर । ४ क्वाथ । ५ बबूलगोंद । ६ वमन नाशक ।

दुष्टदोषाच्छिरःशुद्धिं विधत्तेऽपस्मृतेर्हरम् ॥
सूर्य्यावर्त्ताऽर्द्धभेदादीनशनान्नस्यतो हरेत् ॥ ६४ ॥

टीका—दुष्टः प्रकुपितो दोषः । खिल्त फासिदगलीज अपस्मारः । सरय सुदुर दव्वार दौरानसर—सूर्य्याऽऽवर्त्तादयः शिरोव्याधयः । मुजिर शुश—दोपक्तफुफ्फुसस्येत्यर्थः ॥

अस्पगोल वेजरकतूनाः सेसायूस अजखरः ईसवगोल ॥
हिमस्त्रिगुणितः स्निग्धो द्विगुणश्चोष्मनाशनः ॥
हन्यात्तत्सांद्रपानीयं तृष्णां वांतिं विरेचनम् ॥ ६५ ॥
मण्डूषो मुखशोषघ्नो मुखपाकं हरेद् ध्रुवम् ॥
सद्विघेव मुखस्तम्भं श्रीगुरोरनुकम्पया ॥ ६६ ॥
कुस्तुम्बुरुस्वरसभावनयैतदम्भःसिद्धं विधाय वनितोष्णसमीररोगे ॥
तत्क्लिन्नतूलमतनोर्भवने निदध्यान्निरुज्यमाशु लभते गदितं भिषग्भिः ६७॥
नरोप्येतस्य सांद्रांभोनिहिताऽऽस्वस्थमेहनः ॥
उष्णवातं जयेन्मंक्षु सत्यं सिद्धवचो यथा ॥ ६८ ॥

टीका—सांद्राम्भः—लाब । उष्णवात —सोजाक ॥

दिरम २ द्वितयं वाऽपि त्रयं मात्राऽशने स्मृता ॥
कतीरा दर्पहारी च बदल प्रतिचक्षते ॥ ६९ ॥

टीका—सर्फजल् मारूफ बिहीदाना या तुरूमलिसानुल्हमल या बजरुल्मूर्व दूरतवरीद याने विरेचनौषधोष्मनिष्कर्षणे दूर तरतीव याने भेषजोष्मसम्भूतशोपनिर्हरणे आर्द्रधान्याक कशनीज तर शीरा स्वरसः ॥

अस्फनाक अस्फानाख—पालकपत्रशाकविशेषः ॥
शीतमेकगुणं स्निग्धं द्विगुणं पित्तकासजित् ॥
हृत्पीडां वक्षसस्तोदं नाशयेत्स्रंसनं विशः ॥ ७० ॥

टीका—कासः खुफी, वक्षः सीना, शक्ती १ मुलय्यन् मुजलक् विशः स्रसिनीत्यर्थः । मात्रा यथाऽभीष्टम् । मुस्लिह फिलफिल् गिर्द याने मिरच या दारचीनी या अ.वकामा आरनालं—काजी इतिलोके । प्रतिनिधिः—रूटु या बकलतुल् यमानिया ॥

अस्कील बसलुल् फार उनसल् अस्कीलुल् अवियज प्याज—श्वेतपलाण्डुः ॥
अशीतस्त्रिगुणं रूक्षस्तथा पक्तः ५टक्रमे ॥ ७१ ॥

---

१ छेन । २ बदलेमें । ३ गाजमाके बीन ।

मिस्काल तदग्रः क्षौद्रं दश मिस्काल-संमितम् ॥
चिरंतनश्वासकासगणं हंति कफोत्थितम् ॥ ७२ ॥

टीका-सुआल मुजमिन् याने खुर्फा कोहना-कासश्चिरकालीनः । उसरुल्दम्-श्वासविकारः । सलावत् सिपुरुंज तापतिल्ली । इस्तिस्का-जठराऽऽमयस्तन्निषूदनश्च तक्वियत् मादेकुनद-पक्वाशयपटुत्वकर इत्यर्थः ॥

गोधूमपिष्टांतरितं विधाय पचेत्पुटाख्येन भिषक्क्रमेण ॥ ७३ ॥

टीका-पुटपाकोयम् ॥

शक्तयस्तिस्र उद्दिष्टाः मुफत्तिह मुलत्तिफ ॥
मुदिरं वस्तिगस्याऽपि यस्य नाम कमीज् इति ॥ ७४ ॥

टीका-गोधूमपिष्टं सोदकं यातयामं खमीर इति ॥

आस दरस्कमूरदः ।

शिशिरस्त्वेकगुणितो रूक्षो द्विगुणितः स्मृतः ॥ ७५ ॥
स्वरसश्चाऽस्य पत्राणां शर्बतसंदलसंयुतः ॥
सेवितः स्वेदसंरंभं रक्तपित्तं च सर्वगम् ॥ ७६ ॥

टीका—रोमकूपप्रभृतिसर्वाङ्गप्रवृत्तमित्यर्थः ॥

माधवः ।

"ऊर्ध्वं नासाऽक्षिकर्णाऽऽस्यैर्मेढ्योनिगुदैरधः ॥
कुपितं रोमकूपैस्तु समस्तैस्तत्प्रवर्तते-" इति ॥ ७७ ॥
अंगभेदं निराकुर्याज्जर्बासक्ता-भवं नृणाम् ॥ ७८ ॥

टीका-अंगभेदः कोफ्त हडफूटन इति लोके । जर्बा-हृदि घनप्रहारवद्वेदना । सक्ता-हृत्कमले यतिवच्छेधित्यम् ।

निक्षिपेदग्निसंप्लुष्टे चूर्णं शुष्कदलोद्भवम् ॥
शोधनं शमनं चाऽपि शोषकं संभवेद् ध्रुवम् ॥ ७९ ॥
स्वरसः पत्रसंभूतोंजितश्चक्षुषि दृष्टिदः ॥
जलस्रावं च शोणत्वं हरेत्सर्वविकारनुत् ॥ ८० ॥
पत्रक्वाथे स्थितिः पायोः क्षतं गर्भाशयस्य च ॥
अक्षतं तनुते सद्यो मुदम्मिल् शक्तिभृद्यतः ॥ ८१ ॥

टीका-पायुः-मिकअद । गर्भाशयः—रिहम् ॥

फलं सम्रा इति ख्यातं हव्वलास बुधैरदः ॥
तस्य शर्बत विध्वंसि वांतेरुत्क्लेदनस्य च ॥ ८२ ॥
हृद्दाहकाशशमनं विरेकघ्नं तृषाऽपहम् ॥
देहस्वास्थ्यकरं चोष्मवैकृत्यात्परिरक्षकम् ॥ ८३ ॥
स्वास्थ्ये फुर्सत आराम सेहत् शब्दाः शफा तथा ॥
उत्क्लेदो गशियान् उक्तः तपश् दिल् दवथुर्हृदः ॥ ८४ ॥

असद, शेर–व्याघ्रः ।

द्वीपिनो वसयाऽभ्यक्तदेहश्चरति यः पुमान् ॥
हिंस्रा द्रवंति तद्गंधान्नागा विष्णुरथाद्यथा ॥
तदीयं चर्म्म कौशेयादिषु संस्थं क्रिमीन्हरेत् ॥ ८५ ॥

टीका–आदिशब्देनोर्णापि ॥

चर्म्मणाऽस्य शिरस्त्राणं विधाय परिधारितम् ॥
अपस्मारहरं नृणां बालानां च विशेषतः ॥ ८६ ॥

टीका–शिरस्त्राणं कुलाह ताकी टोपी ॥

आशीना अलक् दव्वालक–छरीला ।

उष्णमेकगुणं रूक्षं द्विगुणं सितगंधयुक् ॥
मुकव्वी कबिद प्रोक्तः अंदक़ काबिज उच्यते ॥ ८७ ॥

टीका–ईषत्संग्राहीत्यर्थः ॥

कबिद जिगर–यकृत् ।

मिस्रदेशोद्भवं मिस्री मुख्यं गौणं तथाऽन्यथा ॥ ८८ ॥
दिरम् एकाऽथवा द्वे स्तो मात्रा दर्पापकर्षिणी ॥
शतपुष्पा अनेसूं या रूमदेशोद्भवा भवेत् ॥ ८९ ॥

टीका–बदल किर्दमाना अजखर सुंबल अतीव ॥

क्वाथे स्थितं रजःस्तंभं पीडां गर्भाशयस्य च ॥
धूपोऽपस्मारदर्पघ्नस्तंद्रासंहारकारकः ॥ ९० ॥

टीका–मुकव्वी कलब याने दिल् हृदयबलप्रदमित्यर्थः । शक्तयः मुइल्लिअखलात फासिद दोषदुष्टवैषम्यजित्, मनइज मुबही च–स्मरोद्दीपिनी । बाह अंगेज ओजःप्रदीपकम् ॥

---

१ घातुकाः ।

उश्शाक् लजाकुलज़ुहव समगतरासीस ।

रूक्षमेकगुणं चोष्णं द्विगुणं सितमुत्तमम् ॥
लीनं यत्स्याज्जले सद्यो मात्रा पञ्च ५ दिरम् भवेत् ॥ ११ ॥
मुस्लिहू जूफा च बादाम निशास्ताऽप्यथवा स्मृतः ॥
सकवीनज् प्रतिनिधिः खर्दिल् वा सूरिसंमतः ॥ १२ ॥
दिरम् १ परिमितं चूर्णं सिर्का पञ्च दिरम् युतम् ॥
प्राशितं नाशयेत्पीडां यकृतः स्रोतसो ग्रहम् ॥ १३ ॥

टीका—सुद्दा जिगर् ॥

अश्मरीखंडनं प्लीह्नो वृद्धिविद्रावणं तथा ॥
एतावदेव विलिहेत्क्षौद्रेणैतावता पुनः ॥
ऊरुस्तंभं संधिवातं क्रिमीनाशु नियच्छति ॥ १४ ॥
वजेमुफासिलध्वंसी गृध्रसीं च नियच्छति ॥

टीका—क्रिमयः किरम् ॥

यवक्वाथाऽनुपीतं च श्वासवेगविमर्दनम् ॥ १५ ॥
स्वरसे शतपुष्पायाः संपेष्य नयनांजितम् ॥
नेत्रपुष्पं च तिमिरं रात्र्यांध्यं पटलं हरेत् ॥ १६ ॥

अश्नान, अशलान—मयूरशिखा ।

रूक्षोष्णा द्विगुणं पक्वा दु २ मिस्कालमिता जले ॥
सि ३ मिस्कालमितक्षौद्रप्रक्षेपं तज्जलं पिबेत् ॥
रजःप्रवर्तकं कोष्णं इस्तिस्का वडवाऽनलः ॥ १७ ॥

असलस्स वेस्वमुहक । मधुयष्टिः मुरहठी ।

समा प्रकृतिभेदेषु चतुर्ष्वपि च शस्यते ॥
मात्रा दिरम—पर्य्याप्ता द्विगुणाप्यथवा स्मृता ॥ १८ ॥

टीका—असल वेस्व जटापर्य्यायौ ॥

क्षोदे कषाये नितरां पित्तकासतृषाऽपहा ॥
पारुष्यं रूक्षतां हन्यात्कण्ठहृत्फुफ्फुसाश्रिताम् ॥ १९ ॥

टीका—खशूनत् हल्क सीना कसवेजुश ॥

मूत्रकृच्छ्राऽश्मरीमेहान्नाशयेद्विविधानपि ॥
नेत्रांऽजितोऽस्याः स्वरसो नाखूनाऽऽमयनाशनः ॥ १०० ॥

असलल्कसव वेस्वनय । नलजटा ।

समा तुर्बेषु शीताऽपि दाहतृष्णाभ्रमाऽपहा ॥
चूर्णिता क्षौद्रसंयुक्ता ह्युमातैलेन मिश्रिता ॥ १०१ ॥
मार्गणक्षतसन्धानं शल्योद्धरणपूर्वकम् ॥
विधत्ते दृक्प्रसादं च नेत्रयोः स्वरसांजनम् ॥ १०२ ॥

टीका—जगीर तुख्मकतां । उमा—अतसी । पैकानतीर वाणशल्यम् ॥

अकलीलुलमल्क—असवरग ।

रूक्षोष्णमेकगुणितं शस्तं पीतं सितं मनाक् ॥
दिरम् मात्रा निगदिताऽथवा मुस्लिह उच्यते ॥ १०३ ॥
सक्षौद्र आस वृक्षस्य क्वाथः सारघमेव वा ॥
शक्तिर्मुहल्लिल प्रोक्ता मुलय्यन मुफत्तिह ॥ १०४ ॥

टीका—प्रतिनिधिः—नीम वजन वरगअंजीर या फरासयून या पोदीना ।

सितोपलेन संयुक्तः क्वाथोऽस्य पिबतां नृणाम् ॥
शोथं संधिगतं सद्यः कोष्ठस्यांतर्गतं हरेत् ॥ १०५ ॥

टीका—सितोपलः कन्दसुफेद मुफासिल् बंदगाह अहशा पर्दा । कोष्ठात.स्थानीय-व्यवधानम् ॥

आमलज आमलय । आमलकम् । आंवला ।

स्निग्धं शीतं द्विगुणितं रूक्षं चाऽपि मतांतरे ॥
प्लीह्नो विकारकारित्वाद् रूक्षं स्निग्धं तृपाऽपहम् ॥ १०६ ॥

टीका—शक्तिः काबिज मुजश्फिफ मुकव्वीदमाग मादा मुफर्रहदिल मुसहिल सौदा सफरा खूब स्याहीसुर्खीमायल रंग श्यामशोणमिश्रितवर्णम ॥

बागी उद्यानसंभूतं क्षुत्कृदुन्नमिताशनम् ॥
चक्षुष्यं सि ३ दिरम् मात्रा मेध्यं क्षौद्रं तु दर्पहृत ॥ १०७ ॥

टीका—बवासीर दुर्नामाऽर्शःपर्यायौ । मेधायै हित मेध्य पावनम जिह्न—मेत्रापर्यायः । बदल् शीदल् शीरा आमलज ॥

अंबरवारीस, जरष्क, जरक।

द्विगुणं शिशिरं रूक्षं शस्तं पक्वं स्वकालतः ॥
किंचित्तीक्ष्णं लोहितं च सरसं संप्रकीर्तितम् ॥ १०८ ॥
गुलाब आदीनवसंप्रहर्त्ता अनारदाना बदल स्मृतोऽस्य ॥
श्रीचंदनं वा वमने विकारे ह्यामाऽतिसारे किल पादपाऽम्लम् १०९॥

टीका—पक्वाशययकृतोः परं बलवर्द्धनम् । शीतप्रकृतेरसात्म्यम् ॥

अंजुवार ।

शीतमेकगुणं रूक्षं द्विगुणं शक्तियुग्मकम् ॥
हाविसूदम् स्यात् मुनक्की च तृतीया च मुलय्यन ॥११०॥

टीका—मुनक्की कुरूहशुश उरःक्षतसंशोधिनीत्यर्थः ॥

रक्ताऽर्शोनाशनं मात्रा हु २ मिस्काल प्रकीर्तिता ॥ १११ ॥

अंजरा। लुटंगन।

रूक्षोष्णं द्विगुणं वृष्यं मात्रा मिस्काल युग्मकम् ॥

टीका—युग्मकं द्वयम् ॥

चूर्णं सितशर्करं क्षीराऽनुपीतं बलवर्द्धनम् ॥ ११२ ॥

टीका—शक्तिः—मुवही ॥

क्षौद्रेण लेपनान्मेढ्रे दार्ढ्यवृद्धिकरं परम् ॥

टीका—कजी व मेहनम् ॥

शिकंजवीं समं प्लीह्नो वृक्कयोर्वेदनाऽपहम् ॥ ११३ ॥

टीका—मुस्लिह कतीरा वदल तुरूमगंदना ॥

अनेसूं राजयानज राजियाना वादियानरूमी । शतपुष्पा पाश्चात्या ।

रूक्षोष्णा त्रिगुणं मूत्ररेचनी शोधनी तथा ॥
चतस्रः शक्तयः ख्याताः मुलय्यन मुफत्तिह ॥
मुंजिज् मुदिर इति च क्रमाद्विकारिणीसमाः ॥ ११४ ॥

टीका—प्रशस्ता नवा मुस्लिह खुब्बसूस बदल् तुरूम शिफत सोवा ॥

इस्तिस्कानाशिनी शोथहरी हैजप्रवर्तिनी ॥
तृष्णापहा च यकृतः स्रोतोरोधविदारिणी ॥ ११५ ॥

दीपिनी ग्राहिणी चामपाचनी ज्वरकासजित् ॥
आमरेचनशक्तिपाककर्त्री काबिज् गण्यते ॥ ११६ ॥

**टीका**—मात्रा दिरम् ९ । बदल कर्वैया ॥

अंजरूत ।

उष्णं द्विगुणितं रूक्षं ज्ञेयमेकगुणं बुधैः ॥
मुसहिल् शक्तिरुद्दिष्टा दुष्टयोः श्लेष्मपित्तयोः ॥ ११७ ॥
कुक्कुटांडद्रवैर्लेपादंजनादक्षिरोगनुत् ॥ ११८ ॥

अन्यच्च—

मोमकाफूरी रोगन्गुल अंजरूत त्रिभिः समिश्रितैः मर्हम् नाम भेषज सिद्ध विधाय लेपा-त्क्षतपूरकं शोषकं च । मुस्लिह कतीरा समग अरबी बदल सिवत् याने एलुवा ॥

अम्बा । नजक । आम्रफलम् ।

अपक्वमम्लं शिशिरं च रूक्षं गुणद्वयं ग्राहि तृषोष्मनाशनम् ॥
सुस्वादु पक्वं द्विगुणं तथोष्णं गुणत्रयं स्निग्धतमं सुकांतिदम् ११९॥
पुष्टिप्रदं कोष्ठमृदुत्वकारकं पित्ताऽविरोधि प्रथितं बलासकृत् ॥
दमागरा कुव्वत दाहहृच्छिशिरोबलप्रदं मुस्लिह शीरकन्दतव १२०

अहलेलजः, अस्फर, हलपजर्दः । हरीतकी ।

शैशिर्य्यमेकगुणितं रौक्ष्यं चाऽत्र गुणद्वयम् ॥
शस्ता गुर्वी हारिद्राभा शिवाख्या शिवकारिणी ॥ १२१ ॥

**टीका**—शक्तिः—मुसहिल सफरा मुकव्वी दिलमादा चूर्णे मात्रा दिरम् या पंज५ दिरम् कषाये हफ्त ७ दिरम् या दह १० दर्पघ्न कंद तुरंजवीं आवगरम् काथे उन्नाव सिपिस्तां प्रतिनिधिः पोस्तअनार ॥

गुलाब घृष्टानयनांजितेयं हन्याज्जलस्रावमथोष्मशोणताम् १२२॥
मिसकालमिता तोये श्रृता पित्तबलासयोः ॥
अनुलोमनकर्त्रीयं शीरखिश्त युता भवेत् ॥ १२३ ॥

**टीका**—शीरखिश्त दह दिरम् ॥

अहलेल अस्वद हलेलय श्याहजंगीहर्र ॥

शिशिरैकगुणा रूक्षा द्विगुणोष्णा मतांतरे ॥
मुसहिल्शक्तिसंयुक्ता शतपुष्पारसांजिता ॥ १२४ ॥

दृष्टिप्रसादजननी क्षुण्णा सौदा विरेचनी ॥
अर्शसां ध्वंसिनी लेपान्नेत्रामयविदारिणी ॥ १२५ ॥
दर्पघ्नं क्षौद्रमुद्दिष्टं हलेलहूकावली बदल ॥
गुणैः श्यामा शिवायास्तु सदृशी साऽपि सम्भवेत् ॥ १२६ ॥

**टीका**—सा कावली—नाम्नी ॥

अतः पृथक्कथा नाऽस्याः कथिता तु विपश्चिता ॥ १२७ ॥

इयल्लयः गवज्ञः-वारहसिंगा ॥

एतद्विषाणयोर्भस्म कतीरा सह सेवनात् ॥
अन्त्रक्षतं च रुधिरोद्गिरणं हरति क्षणात् ॥ १२८ ॥

**टीका**—शाखाशृग कुरह अमिआ जरुमरोदहा अंत्राणां क्षतमित्यर्थः । नफसुलदम् रुधिरोद्गिरणं इसहाल रेचनं सयलानरतूबत् रिहम् स्त्रीणां सोमरोगाः सलावतमादातिहाल पारुष्यं प्लीहकोष्ठयोरेतानपि विकारान्हंति ॥

संरूयून् प्रतिसारणं तद्वदनवेदनाऽपहम् ॥
सिर्का—युक्तं च गण्डूषाद्दन्तपीडानिवारणम् ॥ १२९ ॥
शिशिरे च गव्यघृतयुक्तलेपना—
द्वदनच्छदव्रणनिराकृतौ हितम् ॥ १३० ॥

**टीका**—तशक्कुक् लब अधरविदरणं, शिकाक मिकअद् गुदजक्षतं, विदरणं, चक्रा-रात्तदपि संधत्ते ॥

धूपनाद्धारणात्कत्तेरेतस्य विषकीटजात् ॥
दंशाद्रक्षति विस्फूर्तिः काद्रवेयारिपोरिव ॥ १३१ ॥

ईरसा वेखसोसन खूब आस्मागूंनी ।

गगनाभा प्रशस्ता सा रूक्षोष्णा द्विगुणा तथा ॥ १३२ ॥
दु २ नीम मिस्कालमिता चतुर्गुणे क्षौद्रे लिहन्तं मनुजं पिपर्ति ॥
उरःक्षतात्फुप्फुसवेदनातः कुष्ठादथाऽष्टादशभेदतश्च ॥ १३३ ॥

**टीका**—निक्रिस पादांगुलीः समारभ्य जानुपर्य्यंतं कटिपर्य्यंतं वा वेदनोद्गमो मांसाऽस्थि-सम्भवः, किंच इरकुन्निसा गृध्रसीकटिप्रभृतिपादांगुलीपर्य्यंतं शिरावेदना रांघण—नाम्नी तन्ना-शिनी च ईरसा रोगन्वादाम उष्णोदकपिष्टाभ्यामाभ्यां प्रलेपन पक्वाशयप्लीहयकृद्गर्भाशयजरठत्व-हरम् वजयुल्वरक् जघनपीडा तद्विध्वंसिनी च, जमाद् साद्रविलेपन कल्कादिभिः दर्प्पघ्नं क्षौद्रम्या

१ मंजन इति लोके ।

अफयून तिर्य्याक अहिफेनः अफीम् ।

शीतश्चतुर्गुणो रूक्षस्त्रिगुणो विषसन्निभः ॥

शक्तिः मुखद्दिर प्रोक्ता मुस्किन् औजाय एव च ॥ १३४ ॥

टीका—काविज हाविस मुमसिक मुस्किर एताश्च शक्तयोऽप्यत्र संति ॥

मात्रा अदससंकाशाद्विगुणा परमा भवेत् ॥ १३५ ॥

टीका—अदस मसूरः । दर्पघ्नानि तवक्षीराज्ये फिलफिलेन याने कणोषणे दारचीनी शिकंजवीं बज्रुल्करप्स याने अजमोद जुन्दबेदुस्तरत्रिगुणितो बजरुल्बंज याने प्रतिनिधिः। अजवायन खुरासानी ॥

कुक्कुटांडद्रवैर्लेपात्पिष्टं कुष्ठघ्नमीरितम् ॥ १३६ ॥

टीका—रोगन्ननफशा रोगन्बादाम । द्वयोरेकतरेण समिश्रिताऽहिफेनः कर्णनिक्षिप्तोऽतिवेदनाऽपह स्यात् ॥

इस्फलंजः अस्वलंज लह्यतुत्तीसः शिरीषतरुः ।

शैत्यमेकगुणं धत्ते रौक्ष्यं च द्विगुणं तथा ॥

शस्तः स्वरससंयुक्तो नवीनोऽम्लान एव च ॥ १३७ ॥

टीका—शक्तिः काविजशिकम् बद्धोदरकृत् हप्सदम् । शोणितप्रवृत्तिहृत् । मुदम्मिलकुरूह क्षतादीना सधिगर्तादिपूरकः । दर्पघ्नोऽस्य राजियाना । बदल्—तबाशीर तुख्मगुल्ल याने जीरा गुलाब या तरासीस याने हब्बतुल्बुक्रा ॥

इसरंज सिरंज शिंगरफजावली सिंदूरम् ।

शैत्यमेकगुणं रौक्ष्यं बिभर्ति द्विगुणं व्रणे ॥

शक्तिर्मुजफ्फफ प्रोक्ता सद्यः संशोषिणीति च ॥ १३८ ॥

बदल् सुफेदा मुरदारसंग

मांसोदकं दर्पहरं वदंति ॥ १३९ ॥

इस्फंज अब्रमुर्दा भूमिपतिताऽभ्रखंडः ।

उष्णस्त्वेकगुणं रूक्षो द्विगुणं शस्तता नवे ॥

मुजफ्फिफ मुजह्ली च शक्ती अत्र प्रकीर्तिते ॥ १४० ॥

मात्रैका दिरम ज्ञेया जलार्द्रं परिकल्प्य च ॥

रुव्वहसम फानीज दर्पाकर्षणमुच्यते ॥ १४१ ॥

टीका—बदल् किर्तास कर्गलः कागद ॥

अफ्तीमून आकाशवल्ली। अमरवेल।

रूक्षोष्णत्रिगुणं शक्तिर्मुसहिल् सौदा प्रकीर्त्तिता ॥
मुफत्तिह मुगश्शूशी च शोणबीजा नवा वरा ॥ १४२ ॥
मात्रा क्वाथे पंज ५ दिरम् पुनर्हफ्त ७ दिरम् परा ॥
अस्याः स्वरसमात्रा स्याद्दिरम द्वित्रि २।३ संख्यया ॥ १४३ ॥
रुब्बसेब कतीरा च स्नेहो बादाम-संभवः ॥
दर्पघ्ना बदल ज्ञेया हाशा तुर्बुद-नामिका ॥ १४४ ॥
उस्तखुदूस विस्फायज् इति चाऽपि प्रकीर्त्तितौ ॥ १४५ ॥

अफसनतीन।

उष्णा चैकगुणं रूक्षा द्विगुणं त्रिगुणाऽथवा ॥
प्रशस्ता पीतवर्णाभा नवाऽम्लाना तथैव च ॥ १४६ ॥

**टीका**-शक्तिः मुसहिल्सफरा मुफत्तिह सुद्दा मात्रा क्वाथे दिरम् ५।७।बदल जादह कयसूम दरतकवियत् मादा आसारून या नीमवजन हलेलयजर्द दर्पघ्ने अनेसू-न नीलोफर ॥

अजफारुल्तीव, नाखुन्सदफ, नाखुन्देव, नाखुन्सवाद, नाखुन्परी-व्याघ्रनखम्।

रूक्षोष्णं द्विगुणं शक्तिर्मुकव्वी कबिद स्मृता ॥

**टीका**-याने जिगरांकुव्वत् दिहद यक्तो द्रविणप्रदम् खूब सुफेदी मायलवाशद् दर्पघ्नं गिलैमखतूम गिलेअरमनी प्रतिनिधी अकहवान भूनिंबश्च ॥

अंजदां-तरुविशेषः।

रूक्षोष्णं त्रिगुणं शक्तिर्मुहल्लिल मुलत्तिफ ॥
मुदिर्र चापि कथिता शस्तः श्वेतश्च तीक्ष्णकः ॥ १४७ ॥
मात्रा दिरम १ संकेता मुस्लिह् सिर्का प्रकीर्तितः ॥
बदल् हिल्तीस अंगोजा शब्दौ बाह्लीकवाचकौ ॥ १४८ ॥

इतरीफल-त्रिफलापर्यायः।

**टीका**-एतद्गुणाः संकरसंभवा अवगंतव्याः ॥

इति प्रथमवर्गः १.

# अथ वर्गो द्वितीयः २.

## रदीफ बे ।

बाबूना, बाबूनज, सोनहल ।

उष्णमेकगुणं रूक्षं पीतं पीतप्रसूनकम् ॥
शस्तं मात्रा सि ३ मिस्काल दर्पघ्नं माक्षिकं स्मृतम् ॥१४९॥

**टीका**–दर्पघ्नमिदमांतरोपचारे, बाह्योपचारे तु रोगन्गुल् । प्रतिनिधिः बरंजासफ असवरग । शक्तयः ३ मुलत्तिफ मुफत्तिह मुहल्लिल ॥

सोदावी बलगमी तप्प–हरं प्राशादुदाहृतम् ॥
अश्मरीहृद्रजोमूत्रमृतभ्रूणप्रवर्तकम् ॥ १५० ॥

**टीका**–दिमागरा आसावरा कुव्वत् दिहद ॥

शिरसः शिरःसंबद्धशिराणां च बलावहम् ॥ १५१ ॥
बाष्पस्यैतत्कषायस्य शिरसा परिधारणम् ॥
सद्यो नेत्रविकारघ्नं दोषशोधनपूर्वकम् ॥ १५२ ॥
सिद्धः सिर्का–द्रवे क्वाथो रमद्–नामाऽक्षिरोगहृत ॥
अंतःकृतो बाष्पवाणैस्तद् बुखार निरस्यति ॥ १५३ ॥

**टीका**–रमद–सरुजोंमःस्रावः । चश्मरां अजबुखार पाकगर्दानद मात्राऽधिक्य गलग्रहदोषकरम् ॥

बादरंजबू या तुख्मबालंगा–रामतुलसीबीज ।

रूक्षोष्णं द्विगुणं शक्तिर्मुफत्तिह मुहल्लिल ॥
मुकव्वी कोष्ठशिरसो मनसस्तु मुफर्रिह ॥ १५४ ॥
मुसहिल् सौदा–समाख्यातं मात्रा स्वरससंभवा ॥
दिरम्–मानाप्यशुष्कस्य मिस्काल–द्वितयं २ भवेत् ॥ १५५॥
मुस्लिह् समगअरबी यारीवास् परिकल्पितः ॥
अबरेशम् फलपूर्वो वा प्रोक्तः प्रतिनिधिर्बुधैः ॥ १५६ ॥

**टीका**–खफकान हौलदिल् हृद्रोगः, फवाक हिका, जरब कण्डूः इत्येतानाऽऽमयान् परिहरति । बल्गमी सौदावी मर्जेरा मुकर्रर ॥

बाकलामिसरी तिर्मिस-मिसरदेशोद्भवा शिंवी।
शिशिरैकगुणा विज्ञैः कथिता कुत्रचित्समा ॥
प्रशस्ता पीवरा शुष्का मात्रा स्याद्दिरम द्वयम् ॥ १५७ ॥
गुलाब-मध्ये संपिष्टं प्राशनादार्त्तवेरणम् ॥ १५८ ॥
व्यापन्नगर्भनिःसारकारकं विषनाशनम् ॥ १५९ ॥

टीका-निक्रिस इरकुन्निसा बवासीर संगगुर्दा मसाना जुमले अमराजंरादफेग-दांनद् एनानपि रोगान्निराकरोति। मुजिर्र शिरसः। दर्पघ्नम् उश्शक। प्रतिनिधिः सममानं-सकबीनज वाऽर्द्धमानं जावशीर ॥

वकारे पकारस्यान्तर्भावात्-परस्पाविशां। राजहंसः।
शिशिरस्त्वेकगुणितः स्निग्धश्चाऽपि मतांतरे ॥
समश्चतुर्षु भेदेषु प्रकृतेः शस्त ईदृशः ॥ १६० ॥
काष्ठे शोणश्च पालाशो दलेषु श्लक्ष्ण एव च ॥
हृदयं फुप्फुसं सौदा श्लेष्मकोषाद्विशोधयेत् ॥ १६१ ॥
कामलीं प्लीहपारुष्यं नाशयेल्लेपतोऽशनात् ॥ १६२ ॥
जरायुकर्षणं गर्भाशयमाशु विधाय च ॥
कोष्ठशुद्धिं क्वितनुते रजोमूत्रविरेचनात् ॥ १६३ ॥
अश्मरीतमकश्वासं सेवनान्नियतं हरेत् ॥ १६४ ॥

टीका-जरायुः मशेमा ॥

अहितं शिरसः प्लीह्नो दर्पघ्नी मस्तगी मता ॥
मात्रा मिस्काल-युग्मं स्यात् बनफ्शा बदल स्मृतः ॥ १६५ ॥

टीका-या निस्फवजन रुबसूस ॥

बारादिंजां-वृंताकं, वार्ताकु-भटा इति लोके।
रूक्षोष्णं द्विगुणं रक्तकोपकंडूप्रवर्तकम् ॥
स्वेदात्सलवणं शूलहरं शाकोत्तमं स्मृतम् ॥ १६६ ॥

टीका-मवल्लिद सौदा-जनक सौदाऽऽख्यदोषस्येत्यर्थः। मुहृदिस-बवासीर। दुर्नामोत्पादकमिति। आज्यमस्याऽस्ति दर्पहृत् ॥

बरंगकावली-क्रिमिघ्नम्। वायविडंग।
उष्णमेकगुणं रूक्षं द्विगुणं सूक्ष्मचूर्णितम् ॥

क्षीरेण मिश्रितं पानात्कोष्ठक्रिमिनिपातनम् ॥ १६७ ॥

**टीका**–तक्रलवणयोगेनाऽपि तथैव, हब्बलकरय इक्ष्वाकुबीजसदृशः क्रिमिः मुर्जिर् अन्त्राणाम् । दर्पघ्नः कतीरा, प्रतिनिधिः तिर्मिस ॥

**बरंजासफ, बरंजासव, बरजरासक, कयूमवोयमादरा–तृणविशेषः ।**

**टीका**–एतद्वक्ष्यमाणौषधतुल्यगुण ज्ञेयम् ॥

**वजससकर्गस्त-कुण्डनामतृणाविशेषः । अस्थिभंगादौ संधानार्थ स्वेदलेपविषयिकः ।**

रूक्षोष्णमेकगुणितं सरं चार्शोविकाराजित् ॥

चिरं सेवनमेतस्य कुष्ठसिध्मनिबर्हणम् ॥ १६८ ॥

**टीका**–सीना–वक्षो हृदय च, शुश–फुफ्फुस अनयोः शोधन च । मवल्लिद सौदाशबद ॥

सौदा–समुद्भवकरं पथ्या दर्पघ्नकार्य्यकृत् ॥ १६९ ॥

**बजुल्करप्स, तुख्मकरप्स–अजमोद ।**

रूक्षोष्णं द्विगुणं मूत्ररजोबन्धविभेदनम् ॥

स्रोतोन्मीलनकृच्चापि यकृतो वृक्कयोरपि ॥ १७० ॥

हिक्कां च श्वसनं चापि कासं वातं विनाशयेत् ॥

प्लीह्ने हितमपस्मारवतेऽपि शिशिराऽऽत्मने ॥ १७१ ॥

मुफत्तिह मुगश्शी च मुदिर्र मुबहीति च ॥

दर्पघ्नमस्य माजूनगुल् कान्द मस्तगी भवेत् ॥ १७२ ॥

अनेसूं बदल स्यातोऽथवा फित्रअसाल–युत् ॥

मात्रा मिस्कालयुग्मं स्याद्धिमेनाकिरणावलिः ॥ १७३ ॥

**बज्रुल्ब्बर्बाजी, नालुकुलाग, तुख्मगुल्खैरूकला ।**

चतुष्प्राकृतभेदेषु सदृशं गौरवं हृदः ॥

अन्त्रक्षतं वेदनां च हरेदाशु निषेवणात् ॥ १७४ ॥

**टीका**–वस्तिकर्मणा । हुकना–पर्यायः । रेशर्गीदहा–अन्त्रक्षतम् ॥

विदाह्यौषधदाहघ्नं मात्रा मिस्काल–मानतः ॥

सरघादंशतोदघ्नं लेपाद्विस्फोटपाककृत् ॥ १७५ ॥

**टीका**–गजिदगी जंबर मधुमक्षिकादंश[1] । प्रतिनिधिः तुख्मखतमी ॥

---

[1] ग्रक्रयः ४ ।

बुज़ुल्खतमी, तुख्मखतमी, गुलखैरूखुर्द।
रूक्षा शीता चैकगुणा शस्ता पक्वा सितेतरा ॥
पित्तकासप्रशमनी मात्रा स्याद्दिरम-द्वयम् ॥ १७६ ॥
गुलखैरू कलां प्रोक्त एतत्प्रतिनिधिर्बुधैः ॥ १७७ ॥

टीका-स्निग्धेति केचित्। शक्तयः ४ मुलय्यन मुलत्तिफ मुफत्तिह मुहल्लिल। दर्पघ्ने २ क्षौद्रवदरीफले प्रतिनिधिरपरः नीलोफर ॥

बज्रुल्तवा-अपरा पीतप्रसूना सितच्छत्रा। तुख्मशिबत्त सोवा।
स्निग्धोष्णैकगुणाऽऽध्मानयोनिशूलविनाशिनी ॥
रक्तनिष्ठीवनहरी क्षीरवृद्धिविरेककृत् ॥ १७८ ॥

टीका-मुबही शक्तिः। मात्रा दिरम् ५ बदल् तुख्मशलम् ॥

बज़ुल् जरजीर, तुख्मतिर्मिरा।
रूक्षोष्णं त्रिगुणं कामदीपनं मूत्रकृच्छ्रजित् ॥
रेतोवृद्धिकरं दोषप्रदं मूत्राऽऽशयस्य च ॥ १७९ ॥
दर्पघ्नोऽस्य कतीरा स्यान्मात्रा मिस्काल-युग्मकम् ॥
बज़ुलकुरास एतस्य बदल प्रतिपादितः ॥ १८० ॥

टीका-किंच-तुख्मअंजरा खरदल् ॥

बज़ुलफर्फज, तुख्मखुरफा, बीजलोनियां।
शिशिरं त्रिगुणं स्निग्धं यकृदूष्मनिषूदनम् ॥
पित्तदाहज्वरहरं कासच्छर्दिनिबर्हणम् ॥ १८१ ॥
मात्रा पंज ५ दिरम् प्रोक्ता बदलऽर्द्धप्रमाणतः ॥
वजर्कतूनाऽमुष्य स्याद्वैद्यवर्यैर्विचारितः ॥ १८२ ॥

बज़ुल्लिशादः। तुख्मतरातेजंक-चंद्रशूरः। हालों।
रूक्षोष्णं त्रिगुणं मूत्रकृच्छ्रघ्नं वीर्य्यवर्द्धनम् ॥
बलदं पुष्टिदं वातव्याधिध्वंसनकारणम् ॥ १८३ ॥
कतीरा दर्पहारी स्यान्मात्राऽस्याद्दिरम-द्वयम् ॥
गंदना बदल ज्ञेयो लेपादाघाततोऽनुत् ॥ १८४ ॥

---

१ त्र्यंशा।

बज्रुल् जजर तुख्मजर्दक–गृंजनबीजम् ।

उष्णमेकगुणं रूक्षं द्विगुणं मुबहीति च ॥
रजःप्रवर्तकं गर्भपातनं मूत्रशोधनम् ॥ १८५ ॥
मात्रा मिस्काल–युगलं अनेसूँ बदल स्मृतः ॥
शक्तिर्मुदिरं सर्वेषां मुगश्शी चाऽपरा स्मृता ॥ १८६ ॥

बज्रुल्कुरास, तुख्मगंदना ।

उष्णं शीतं त्रिगुणितं शस्तं श्यामं च पीवरम् ॥
निहंति श्लेष्मजां हिक्कामर्शांसि विविधान्यपि ॥ १८७ ॥
खण्डनं रेतसो दुष्टकीटदंशविषाऽपहम् ॥
मात्रा दिरम–युग्मं स्यात्क्षौद्रं दर्पघ्नमीरितम् ॥ १८८ ॥

टीका–शक्तिः–मुकत्तयमनी शुक्रशोषिणीत्यर्थः। खूब शामी–शामदेशोद्भवा। बदल जरजीर ॥

बज्रुल्बज, बंगदीवाना। अजवायन खुरासानी ।

प्रशस्ता धवला रक्ता शीता रूक्षा गुणत्रयम् ॥
धीचक्षुरान्ध्यकृत्कर्णगौरवोत्पादिनी परा ॥ १८९ ॥
कण्ठग्रहं च मनसो विक्षेपं वितनोति च ॥
रक्तनिष्ठीवनं सर्वपीडामाशु व्यपोहति ॥
नीम मिस्काल मात्रा स्यात्तिर्याक बदल स्मृतः ॥ १९० ॥

टीका–अकल बुद्धिः, खुनाक कण्ठग्रहः, जनून चित्तविक्षेपः। तारीकीचश्म चक्षुर्मांद्यं स्तमःप्रवेश इव ॥

बज्रुल्फजल तुख्मतुरब–मूलकबीजम् ।

उष्णमेकगुणं रूक्षं द्विगुणं पीवरं वरम् ॥
मुकयी मुवही शक्ती २ मात्रा दिरम २ युग्मकम् ॥ १९१ ॥
श्लेष्मातकं च कशनीज् शर्करा दर्पहारिणः ॥
बदल् हब्बारिशाद स्याद्यकृद्दोषकरं बहु ॥ १९२ ॥
मुख्यव्यंगं च सिध्मानं कुष्ठं नानाविधं क्षतम् ॥
मिस्कालयुग्मं दुष्टानां कीटानां विषनाशनम् ॥ १९३ ॥
रजःप्रवर्तकं दोषोत्पादकं यकृतो भवेत ॥ १९४ ॥

टीका–बहक सिध्मा सेव। कलफ नमश। व्यंगमास्यसमुद्भवम् ( झाई ) इति लोके ॥

बज़्रुल्मर्व तुख्मक नोचा ।

स्निग्धोष्णमेकगुणितं समं वा भृष्टमेव तत् ॥

दिरम—द्वितयं ग्राहि रक्तसंग्रहणीहरम् ॥ १९५ ॥

दोषप्रदं फुप्फुसस्य दर्पघ्नं गुलनार च ॥

बदल् वजकतान् रुयात उमाबीजमिति स्मृतम् ॥ १९६ ॥

टीका—जुसंतायां रक्तप्रवाहिका सहज रेशरोदा अन्त्रक्षतं जुहीर आमाऽतिसरणम-नयोर्नाशनम् ॥

बज़्रुलहल्कून, तुख्ममारचोव-नागदमनीबीजम् ।

स्निग्धोष्णं द्विगुणं शस्तं बोस्तानी दिरम—द्वयम् ॥

मात्रा असलमुस्लिह् स्यादथो बदल उच्यते ॥ १९७ ॥

टीका—तूदरी नीमवजन् या शकाकुल दरबीमारी मसाना नीमवजन तुख्मकाक-नज या इनबुस्सालिब ॥

शुक्रवृद्धिकरं मीनकेतनोद्दीपनं परम् ॥

क्षीरप्रवर्तकं स्त्रीणां पक्षाघातविघातकृत् ॥ १९८ ॥

टीका—इरकुन्निसा कूलिंज वल्गमीरीही कफवातोद्भवं शूलम् । एतयोर्निषूदनं शिरसो-भूयिष्ठमहितम् ॥

बज़्रुल्कतां । उमाऽतसी । तुख्मजगीर् ह्म्मेगोयंद ।

समा प्रकृत्या सर्वत्र मात्रा स्याद्दिरम—द्वयम्[1] ॥ १९९ ॥

शक्तिः मुंजिज विख्याता मुलय्यन मुफत्तिह ॥

शस्ता नवा पीवरा च मुस्लिह् असल सम्मतम् ॥ २०० ॥

बदल् हलुआ समादिष्टा शोथघ्नी लेपतो भवेत् ॥ २०१ ॥

टीका—हलुवा मेथी दोषघ्नी गुलकंदहम ।

बज़्रुलकसूस—तुख्मकसूस । कुसुम्भबीजम्, शीतज्वरहरं च ।

स्निग्धत्वे शिशिरत्वे च रूक्षत्वोष्णत्वयोरपि ॥

सदृशं पीवरं शस्तं मात्रा दिरम—युग्मकम् ॥ २०२ ॥

दर्पघ्नम् अंगबीन स्यात् कासनी बदल स्मृतः ॥ २०३ ॥

टीका—या अफसनतैन शक्तिः मुफत्तिह सद्दाह कंविद यकृद्रोधविरोधकृत् । मुदिर्र—रजोमूत्रयोः शोधनं रेचन च प्लीहपक्वाशययोर्दुष्टदोषेभ्यः शुद्धिकृत् । फुप्फुसाऽहितम् । दर्पघ्नः समग अरबी ॥

---

१ त्रयं वा ।

बज़्रुल् हंदवा, तुख्मकासनी ।

शस्तमुद्यानसंभूतं मेचकं पीवरं तथा ॥

समं तुर्यप्रकृतिषु ज्वरं हन्यात्ससैन्धवम् ॥ २०४ ॥

कल्कितं कामलाघ्नं स्याद्यकृत्स्रोतोविबन्धहृत् ॥

मिस्काल पंचकं ५ मात्रा फुप्फुसोपाधिकृद्दहु ॥ २०५ ॥

शिकंजवीं दर्पहरी कसूस मानार्द्धमुक्तो बदल प्रवीणैः ॥

बज़्रुलकनव—विजयाबीजम् ।

टीका-शाहदाना-पर्य्यायः शकारवर्गे वक्ष्यते ॥

बज़्रुलहुमाज, तुख्मतुरंज-फलपूरबीजम् ।

रूक्षं शीतं द्विगुणितं ग्राहि पित्तनिवारणम् ॥

शस्तं पीतं मेचकं च किंचिद्रक्तं निगद्यते ॥ २०६ ॥

टीका-मात्रा दिरम् २ मुस्लिह कंद बादियान् तुख्मकरफ्स बदल लिसानुल्हमल ॥

बज़्रुलिफत, तुख्मशलाम् ।

स्निग्धोष्णमेकगुणितमोजोवृद्धिप्रदीपनम् ॥

प्लीहदोषकरं भूरि बज़्रुलिवत्तीखदर्पहृत् ॥ २०७ ॥

टीका-मात्रा दिरम् २ ॥

बज़्रुलअसल, तुख्मः प्याज। पलांडुबीजम् ।

रूक्षोष्णमेकगुणितं मीनकेतोः प्रदीपनम् ॥

गुणैः पलाण्डुसदृशं समं च सितशोणयोः ॥ २०८ ॥

टीका-मात्रा दिरम् २।बदल ज़ीमवजन तुख्मशलाम् या तुख्माशिबत या तुख्मगंदना॥

बज़्रुलिकशा, तुख्म-बादरंग-खीरेके बीज।

स्निग्धमेकगुणं शीतं मूत्रकृच्छ्रोष्णवातजित् ॥

त्वग्दाहशमनं वर्ण्यमुत्सादनविधानतः ॥ २०९ ॥

टीका-उष्णवातः सोजाक । उत्सादनमुद्वर्तनम् ॥

अतियोगान्मूर्द्धशूलकरं तस्य विकारनुत् ॥

शिकंजवी समाख्याता दिरम् बाणर्षिदिग्मिता ५।७।१० ॥

मात्रा भिषग्भिरुदिता बदल् एर्वारुबीजकम् ॥ २१० ॥

बज्रुलिकशाकवीर, तुख्मखिया दराज।

प्रकृत्या पूर्वसदृशं वस्तिमूत्रोष्णतापहृत् ॥

शूनस्य यकृतो दाहं हंति मेघस्तपं यथा ॥ २११ ॥

टीका-मूत्रोष्णता हिर्कतुल्वोल शर्वत् मजरत बद्ल-पूर्ववत् ॥

बज्रुलवतीख, तुख्म खरबूजा-शीर्णवृन्तम्।

स्निग्धोष्णं च पुनः शीतं केषांचित्सममीरितम् ॥

गुणमेकं पित्तकासवक्षोंतःस्थोष्णशोथहृत् ॥ २१२ ॥

हृद्रोगध्वान्ततरणिरतियुक्तं तृषाकरम् ॥

यकृत्स्रोतोविबन्धघ्नं मूत्राबन्धाविबन्धकृत् ॥ २१३ ॥

प्लीह्नोऽविकारकृद्धूरि मुस्लिहश्च आबबादियाँ ॥

मात्रा पञ्च दिरम् पित्तकासहृद्धृदयाऽर्तिजित ॥ २१४ ॥

टीका-खुर्फा गरम्-पित्तकासः। दर्दसीना-वक्षःपीडा। आतश तिश्नगी-तृषा॥

बज्रुलरैंहान्।

हृत्कोशबलकृत्कासहरं प्रकृतिभिः समम् ॥

ईषद्भृष्टं जलेनाऽनुपीतं सामाऽतिसारजित् ॥ २१५ ॥

टीका-खूब कूचक खुशवोय-शस्त क्षुद्र सुरभि ॥

वृक्कयोरहितं मुस्लिह् मर्जंगोश समीरितः ॥

बज्रुलमूर्व प्रतिनिधिः स्वीकृतो वैद्यसत्तमैः ॥ २१६ ॥

बज्रुलवदी, तुख्मगुल, 'जीरागुलाब।

रूक्षं शीतं चैकगुणं समं काबिज हाविस ॥

कवलीकृतमुच्छूनदन्तमूलस्य दार्ढ्यकृत् ॥ २१७ ॥

दर्द चश्म-हरं ख्यातमनेन विधिना पुनः ॥

दर्पघ्नी मस्तगी प्रोक्ता मात्राऽस्य दिरम-द्वयम् ॥ २१८ ॥

बज्रुलपंजअंगुस्तः-निर्गुण्डीबीजम्।

रूक्षोष्णं त्रिगुणं शस्तं पुष्टं च दिरम-त्रयम् ॥

मात्रा मुस्लिह विज्ञेयं बज्रुलिवतीख-कोविदैः ॥ २१९ ॥

बज्रुलशिफत प्रतिनिधिः पुराविद्भिरुदाहृतः ॥ २२० ॥

बतीखजकीः । कलिंद, तर्बूज ।

स्निग्धं शीतं त्रिगुणितं प्रशस्तं सजलं मधु ॥
दर्पघ्नः कन्दस्याह स्यान्माक्षिकं वा तथाऽपरे ॥ २२१ ॥
उदन्यां रक्तपित्तोत्थानामयान्हंति सत्वरम् ॥
मूत्रकृच्छ्रोष्णवातं च बलासविकृतिप्रदम् ॥ २२२ ॥

बतीख । शीर्णवृंतम् । हिन्दीः खरबूजा ।

स्वादुमत्स्निग्धशीतं स्यान्मूत्ररेचनकारकम् ॥
अश्मरीघ्नं पुष्टिकरं वर्ण्यमर्शोविकारनुत् ॥ २२३ ॥
चित्तभ्रमहरं शस्तं शोणं पालाशमेव वा ॥
अस्वादु शिशिरं स्निग्धमनेकातंककृद्भवेत् ॥ २२४ ॥

टीका–शोणगुण जमाली, हरिद्वर्ण सर्दा ॥

बिस्फायज फिस्तगी ।

रसैः सुरप्रसूनेन तुल्यमन्तर्मुकूलवत् ॥
अशीतं द्विगुणं रूक्षं त्रिगुणं समुदीरितम् ॥ २२५ ॥

टीका–मुकूलः पिस्ता ॥

रेचनादाशु संहारे सौदावलगम–दोषयोः ॥
शूलघ्नमीरितं मात्रा दिरम–द्वयमुच्यते ॥ २२६ ॥
पञ्चकं ५ वा स्मृता दर्पहरी पीता हरीतकी ॥
आकाशवल्ली बदल अफ्तीमून् इति कीर्तिता ॥ २२७ ॥

बुस्सुद, मरजानः । विद्रुमजटा–प्रवालशिफा ।

सिताऽसिता च शोणा च वर्णतस्त्रिविधा भवेत् ॥
शस्ता सूक्ष्मा रक्तवर्णा शीता रूक्षा गुणत्रयम् ॥ २२८ ॥
तद्भूती रुधिरस्रावं हंति सद्यः क्षतोद्भवम् ॥
अञ्जिताचक्षुषोरम्भःस्रवणं नाशयत्यपि ॥ २२९ ॥
प्रसारणाद्दन्तपीडावारणी समुदाहृता ॥ २३० ॥
एषा १ दिरम् शर्बत अंजुबार दिरम् ४ चतस्रः परिमिश्रिते द्वे॥
संसेवितेंत्रक्षतपूरणार्थे समर्थसारे निपुणैः प्रयुक्ते ॥ २३१ ॥

कंठदेशनिबद्धेयमपस्मृतिहरी स्मृता ॥
पदबद्धा च निक्रिस-क्षयदक्षा भवेत्क्षणात् ॥ २३२ ॥

टीका-मुजिर्र वृक्कयोः । दर्पघ्नः कतीरा । बदल दरहवसखून दम्मुलअखवैन ॥

बोस्तान, अफरीज, ताजस्वरोष, ताजसुर्ख ।

शीतमेकगुणं रूक्षं कथितं दिरम--द्वयम् २ ॥
शिकंजवीं-युतं पंज ५ मिस्काल-परिमाणतः ॥ २३३ ॥
पीतमौष्ण्यं यकृत्कोष्ठभवं नाशयति द्रुतम् ॥ २३४ ॥

टीका-हरारत् जिगरमादा ॥

मुजिर्र वस्तिस्थानस्य दर्पघ्नः कुंदुरुः स्मृतः ॥ २३५ ॥

वेसवासय, बुजवाज-जातिपत्री जावित्री ।

रूक्षोष्णा द्विगुणाऽऽध्मानहरी वैरस्यहारिणी ॥ २३६ ॥

टीका-मुहल्लिल नास्व सलावत् सिपुर्रुज प्लीहपारुष्यं, मुकव्वी मादा सहज सरुज-मंत्रक्षतं नश्सुलदम् रुधिरोद्गिरणं सिल २ वोल मूत्रातीसारम् ॥

हिनस्ति रोगान्कथितान्समस्तान् मात्रया दिरम् ॥ २३७ ॥

टीका-वदल जातीफलम् ॥

बज्जुल्--प्याज । रक्तवर्णः पलांडुः ।

स्निग्धोष्णस्त्रिगुणं तीक्ष्णः सरः क्षुद्बोधकः परम् ॥
दुर्नामहरणो वर्ण्यः प्रसूनेषुप्रदीपनः ॥ २३८ ॥

टीका--शहवत अंगेज इत्यर्थः ॥

सारमेयविषघ्नश्च लेपनादशनादपि ॥
रजःप्रवर्तकश्चाऽपि प्रलेपात्कुष्ठसिध्मजित् ॥ २३९ ॥
स्वरसोऽस्य कवोष्णस्तु शैत्यघ्नश्चक्षुषांजनात् ॥
कर्णक्षिप्तो गुरुत्वघ्नो वेदनाघ्नश्च संस्मृतः ॥
नेत्रांजितः पुष्पहरो नाखूनाऽऽमयनाशनः ॥ २४० ॥

टीका-शक्तिः मुकत्तयकदूरतउज्व नेत्रादींद्रियमालिन्यखंडनीत्यर्थः । दर्पघ्नः सिर्का चाशनीदार ॥

वरफा-कुलफेका साग ।

स्निग्धं शीतं त्रिधा लेपादुष्णशोथलयप्रदम् ॥
भृष्टं संप्राशितं सद्यो रक्तपित्तनिरोधकम् ॥ २४१ ॥

कल्कितं मूत्रकृच्छ्घ्नं त्वतियुक्तं निशांध्यकृत ॥
पोदीना दर्पहारी स्याद्दीप्यको वा विनिश्चितः ॥ २४२ ॥

**टीका**–बद्‌ल उशीरः सख्यातः । शक्तिः मुज्लक्सुहाह्लिल वकम् । पत्तूरः पतंगः ॥

रूक्षोष्णं त्रिगुणं सूक्ष्मचूर्णितं क्षतपूरकम् ॥
मांससंरोहणं क्लेदपूयशोषणकारि च ॥ २४३ ॥

बलूत ।

रूक्षं शीतं द्विगुणितं कथितं ससितोपलम् ॥
रक्तनिष्ठीवनं हंति क्षतमंत्रसमुद्भवम् ॥ २४४ ॥
तक्रीरुलबोल सोमघ्नं सद्यः प्रोक्तं मनीषिभिः ॥
दर्पघ्नः कन्दकृष्णः स्यात् बदल् खर्तूब ईरितः ॥ २४५ ॥

बलेलज बलेलयः । विभीतः–बेहेरा ।

शिशिरो द्विगुणं रूक्षस्त्रिगुणं श्लेष्मशोषणः ॥
दृष्टिप्रसादनो दुष्ट उत्तरार्द्धेऽस्य वर्ष्मणः ॥ २४६ ॥
दर्पघ्नम् अंगवीन स्यात् शर्बत् पंज ५ दिरम् भवेत् ॥
बदल् जंगी शिवाऽऽख्याता प्रतीचीभिषजां मते ॥२४७॥

बिलादर–भल्लातकः–भिलांवें ।

रूक्षोष्णस्त्रिगुणं वह्निज्वालातीक्ष्णो ह्यरुष्करः ॥
कामसन्दीपनो रेतोवृद्धिदः पुष्टिदः परः ॥ २४८ ॥
वलीपलितखालित्यजरा जीर्णाः करोत्यसौ ॥

**टीका**–उस्तरखाऽसव शिरःसंबद्धचेष्टावाहिनीशिराशैथिल्य, नसियान फरामोशी विस्मृतिः, फालिज पक्षवधः लक्काऽर्दितम्, इत्यामयान्निहन्ति।जिहन् प्रतिभाविशेषाद् बुद्धिविलासः तदुद्दीपकः, हाफिजा मेधा तद्वृद्धकरश्च मर्जदमागरिलूवराजायलादानद शिरोंतर्गतश्लेष्मा-ऽऽतंकनिवारणः ॥

अतियुक्तस्तु सौदावी मर्ज–संपादको द्रुतम् ॥
जनून चित्तविक्षेपो जुजाम् वातास्त्रनामकम् ॥ २४९ ॥

**टीका**–तद्विधायकश्चाऽपि स्पर्शतः शोथकण्डूकरः । नागरोद्धूलनं च कण्डूशोथक्लेदशोषणं च । अत्यन्त उपविषसदृशः ॥

नारिकेलतिलसाहचर्य्यतो यद्वदंकुशवशीकृतो गजः ॥
किं च गव्यघृतसेवनं महाकोपहारि गदितं भिषग्वरैः ॥ २५० ॥

टीका–अथवा हव्वसमनय रोगन्बादाम विहीदाना मात्रा १ अदद ॥

बील श्रीफल—अनार । हिन्दी बिल्वम् ।

समं सर्वात्मना सद्योऽतीसारग्रहणीहरम् ॥
वातघ्नमन्तर्वलकृच्छिरापारुष्यनाशनम् ॥ २५१ ॥
सेवनाद्धंति सततं छर्दिंपक्षवधाऽर्दितम् ॥
मात्रा दिरम–युग्मं २ स्याद्दर्पघ्नो दीप्यकः स्मृतः ॥ २५२ ॥

टीका–प्रतिनिधिः संग्रहणे विषये तुख्मतमर हिन्दी ॥

बनफशज–बनफशाः ।

स्निग्धं शीतं त्रिगुणितं तत्काथो यवपिष्टयुक् ॥
प्रलेपादुष्णशोथघ्नः पानतोऽपस्मृतिं हरेत् ॥ २५३ ॥
प्रदेहः पूर्ववच्छीर्षतोदसंनोदनः स्मृतः ॥
खशूनत् हल्क सीने हम् जुकाम गरमी–भवः ॥ २५४ ॥
जख् ममाने सोजाक संहरेच्च कषायकः ॥
दर्पघ्नं देवकुसुमं बदल कशूनीजतरं मतः ॥
वस्तिपीडोष्णवातघ्नो मात्राऽस्य दिरम–द्वयम् ॥ २५५ ॥

पंजअंगुष्ठ–खमसतुलऔराक–संभालू ।

त्रिगुणं द्विगुणं रूक्षमुष्णं वै शक्तयोऽस्य तु ॥
मुफ़्तिह् मुलित्तह् मुलत्तिफ़् च मुहछिल् गुणसंख्यकाः २५६
शिकञ्जवी सनाथं चेत्सेवितं प्लीहरुक्प्रणुत् ॥
अतियुक्तं शिरःपीडाकरं विद्वद्भिरीरितम् ॥ २५७ ॥

टीका–शिरोऽर्त्तिः सुदाय दर्पघ्नः समगअरबी शर्बत् । दिरम १ ॥

बिंदक–फिन्दक ।

द्विगुणं त्रिगुणं स्निग्धमुष्णं कामविवर्द्धनम् ॥
शूककीटाऽहिदंष्ट्राणां विषघ्नं लेपतोऽशनात् ॥ २५८ ॥

टीका–गजीदगी जानवरान मोरवगैरे खासअकरकरा ॥

चिरन्तनक्षवथुहरं निषेवणात्सितायुतं मधुसहितं च वा भवेत् ॥
अपानहं त्वधिकवरं निषेवितं विनिश्चितं मतिविभवेन सूरिभिः २५९

टीका–मुस्तिह फानीज बतासे शर्बत् पंज ५ दिरम् या मिस्काल। बदल मग्ज-जीज मीगी अखरोट या चिलगोजा ॥

बिन्दक । हिन्दी–रीठा ।

ईषच्छ्यामतया लक्ष्यः श्लक्ष्णो रूक्षोष्णताधरः ॥
द्विगुणं लेपतः सिर्कायुक्तः सपदि नाशयेत् ॥ २६० ॥
ग्रंथिगण्डाऽपचीगंडमालाः कालो जगद्यथा ॥
मर्जंगोश–रसैनाशु नस्यं रात्र्यान्ध्यनाशनम् ॥ २६१ ॥

टीका–खुनाजीर मन्थ्यादिपर्य्यायः शऊत नस्यमार्द्रम् ॥

बूजीदान । शतावरी–सतावर ।

पीनाऽवदाता नितरां प्रशस्ता रेखांकिता च त्रिगुणत्वधात्री ॥
रूक्षोष्णतापांस्तनुसंधिभेदं प्रभंजनोत्थं विनिहंति सद्यः ॥ २६२ ॥

टीका–वजेमुफासिल–दर्दबंदगाह संधिपीडाः ॥

चेष्टापाटवशुक्रवृद्धिमतनूं वृद्धिं तनोः पीनतां
दत्ते क्षीरसितायुता च पुरुषैः संसेवितेयं वरी ॥ २६३ ॥

टीका–असवरा अजअखलात गलीजपाकसाजद ॥

शिरःशिराशोधनसाधनी च वर्णप्रसादं वितनोति सद्यः ॥
दर्पाऽपहे खर्दिल अंगवीन शक्तिर्मुलत्तिफू परिकीर्तिताऽत्र२६४

टीका–मात्रा दिरम् २, वदल समानमान वहमन् सुफेद ॥

बोरकः नलरून्–बूरेअरमनी ।

टंकणः तंकार–टंकणः । सुहागा ।

रूक्षता त्रिगुणा चाऽस्मिन्नुष्णत्वं द्विगुणं स्मृतम् ॥
खंडनं दोषकोपस्य विशेषात्कफशांतिकृत् ॥ २६५ ॥

टीका–कितेअखलातगलीजकुनद खासवलामूरा मिगस याने पेचशरा साकिन गर्दानद ॥

आमशूलप्रशमनो वातव्याधिसरीसृपः ॥ २६६ ॥
पिष्ट्वा रोगनगुल्–मध्ये सुखोष्णः श्रुतिपातितः ॥
सद्यः प्रशमयेत्पीडां दुःखं दुर्गाऽर्चनं यथा ॥ २६७ ॥

क्षुण्णं क्षौद्रेण सँल्लेपान्मेहने स्मरदीपनम् ॥
गुलाब-पिष्टमथवांऽभसा पिष्टमथापि वा ॥
नेत्रांजितं हरेच्छैत्यं कुसुमं चिरकालिकम् ॥ २६८ ॥
योषिच्चिरातंकमभीप्सुरेनं स्मरालये तूलवृतं निदध्यात ॥
गर्भाशयक्लेदहरं नृणां च व्यवायसौख्यप्रदमस्ति भूयः ॥ २६९ ॥

टीका-नशफ़रतूबात रिहम् कुनद याने तरावत् चवेदानराखुश्कसाजद शर्बत् दिरम् १ बदल-समानं लवणं-या मिलह इदरानी ॥

बूषदखंदीः ।

शीतमेकगुणं रूक्षं इनबुः सालिबद्रवैः ॥
पिष्टं प्रलेपतो निक्रिसनाशनं संप्रकीर्तितम् ॥ २७० ॥

टीका-बदल शयाफ मामीशा ॥

बहरामज-बेदमुष्क ।

प्रकृत्या मातदिल् ज्ञेयः संग्राही वातदोपहृत ॥
शिरोऽर्तिनाशनः स्वान्ताऽऽमयविध्वंसकारकः ॥ २७१ ॥

बहमत्सुर्ख-सुफेद । अश्वगन्धा बिलायती ।

सितः प्रशस्तो द्विगुणं त्वरूक्षश्चोष्णस्तथा शुक्रविवृद्धिकारी ॥
पुष्पायुधोद्दीपनदेहपुष्टिदः कृच्छ्राश्मरीनाशन ईरितो बुधैः २७२॥
मात्रा दिरम १ दर्पघ्नी अनेसूँ परिकल्पिता ॥ २७३ ॥

बेजा-पत्ररथाण्डम् । विशेषात्ताम्रचूडस्य ।

किंचिद्भृष्टं पचत्याशु पौष्टिकं कासशोषहृत् ॥ २७४ ॥
स्निग्धोष्णं त्रिगुणं शक्तिर्मुनइज् मुबही पुनः ॥
कान्तानन्तप्रमोदार्थं पुष्पचापेषुदीपनम् ॥ २७५ ॥

टीका—तीमविरिश्त अर्द्धभृष्टं सर्पिषि या दररोगन्वादाम स्निग्धोष्णत्वेन दीपनगुण-सम्पन्नेऽपि मुमसिक-शक्तिभृत् वीर्यवारिधिकारकं च ॥

क्षौद्रसंयुक्तसँल्लेपात्कुष्ठसिध्मविघातकृत् ॥
पीतद्रवगुणा एते निर्दिष्टाः कुशलैर्नृभिः ॥ २७६ ॥
अथ श्वेतद्रवं चास्य स्निग्धं शीतं प्रलेपतः ॥
चक्षुरातंकशमनं शोणिमाऽर्तिविनाशनम् ॥ २७७ ॥

मात्रा यथाबलं दर्पहरं सर्पिः प्रकीर्तितम् ॥ २७८ ॥

बीश-वत्सनाभः । बचनाग ।

विषेष्वधममुद्दिष्टं रूक्षोष्णं तुर्यधा स्मृतम् ॥

मुस्लिह् पयोघृतं चाऽस्य जीर्णे वांतिः स्मृता बुधैः ॥२७९॥

इति द्वितीयवर्गः २.

## अथ वर्गस्तृतीयः ३.

### रदीफ ते ।

तम्बोल । नागलतादलम् ।

उष्णं द्विगुणितं रूक्षं तावत्कामप्रदीपनम् ॥

मुखसौरभ्यवैशद्यकरं क्षुद्बोधकं भवेत् ॥ २८० ॥

दशनाऽर्तिहरं वातश्लेष्मव्याधितृणाऽनलः ॥

शूलकासश्वासहिक्काशैत्यध्वान्तप्रभाकरः ॥ २८१ ॥

मुनइज् मुबही मुस्कित् मुलय्यन् शक्तयः स्मृताः ॥

मुसारिखन् मुजल्ली च दर्पघ्नं फूफल स्मृतम् ॥ २८२ ॥

भिषग्वर्यैश्चोदितं च शस्तं पक्वं चिरन्तम् ॥

रसधातुसाहचर्याज्जराद्युपसर्गवारणम् ॥

मात्रा यावदामोदाऽऽविर्भावः खूलिंजान बदल् ॥ २८३ ॥

तिर्मिसबाकलारूमी । कुल्माषविशेषः ।

अतिश्लक्ष्णोऽवदातश्च प्रशस्तः पीवरो महान् ॥

उष्ण एकगुणं रूक्षो द्विगुणं च प्रलेपतः ॥ २८४ ॥

ससारघः सिध्मकुष्ठं हरेद्विष्णुरिवासुरान् ॥

सिर्का-संपिष्टमथवा तथैव गुणकारकः ॥ २८५ ॥

प्लीहवृद्धिं हिनस्त्याशु पुनश्चानेन संयुतः ॥

मधुमुरामक्कई-युक्तं वनितास्मरमंदिरे ॥ २८६ ॥

धारयेदार्तवस्याऽपि मृतभ्रूणस्य चेरणम् ॥ २८७ ॥

टीका-बद्ल हमवजन् दिरमने अरमनी ॥

तुर्बुद । श्यामा–त्रिवृत् । निसोत ।

कनिष्ठाऽनामिकापीना शस्ता पिष्टा सिता भवेत् ॥
निस्तुषा त्रिगुणं चोष्णरूक्षा श्लेष्मविरेचनी ॥ २८८ ॥

टीका–जीर्णा सूक्ष्मा न प्रशस्ता । कोहने वारीक नवाशदः दरासितुर्बी मयान खिनसर व–विनसर बुवद् कनिष्ठानामिकयोर्मध्यमागसदृशी पीवरेत्यर्थः । रेशेदारन शवद् निस्तुपेत्यर्थः ॥

महौषधसनाथेयं पक्षाघातमपस्मृतिम् ॥
कफकासं श्रोणिपीडां हरेदार्तवहेतुजाम् ॥ २८९ ॥

टीका–अगर वा जंजवील तर कुनद मफलूज मसरूपरा नफेरसानद सुर्फेव-लगामीरा जायलगर्दानद दर्दपुश्तरा कि व वक्तहैजहादिसगर्दद जायल कुनद शर्वत २ ३ दिरम् दर्पघ्नः वजकेतूना बदल पोस्त तून या हुब्बनील गारीकून मुसब्बिर हिंजल ॥

तुरंजवी ।

समा प्रकृतिभिः शक्तिर्मुलय्यन् अत्र विद्यते ॥
रक्तपित्तज्वरं पित्तकासं नाशयति ध्रुवम् ॥
हृदः शुद्धिकरी तृष्णाहरी सन्तापनाशिनी ॥ २९० ॥
शर्वत दिरम् दिङ्नख १०।२० संख्यया च
सुर्फे गरम् राऽनलवारिदाऽऽभा ॥ २९१ ॥

तुफाह । सेव ।

मिष्टं तु स्निग्धमुष्णं हि बुधैरेकगुणं स्मृतम् ॥
यदम्लं रूक्षशीतं तद्द्विगुणं सम्प्रकीर्तितम् ॥ २९२ ॥
मधुरं सदृशं यत्तत्सर्वप्रकृतिषूदितम् ॥ २९३ ॥

टीका–सदृशं मातदिल याने दर शीरीनी तुर्शी मायल बाशद ॥

तन्मिष्टं हृद्यमुद्दिष्टं मनःसन्तोषदायकम् ॥
वीर्यसंवर्द्धनं पुष्पकार्मुकोद्दीपनं स्मृतम् ॥ २९४ ॥
उदन्यावेगशमनं मधुरं तत्प्रकीर्तितम् ॥
वान्तिघ्नं ग्राहिसंख्यातमम्लं वाध्मानकारकम् ॥ २९५ ॥
कषायमधमं प्रायो दोषसंचयकोपकृत् ॥ २९६ ॥

टीका–तुफ्फाहर्वरीजरूर तुश्फाहफारसी शफतालू तुश्फाह माही तुरंज ॥

तमर-खुर्म्मा । खर्जूरः । छुहारा ।

स्निग्धोष्णमेकगुणितं बृंहणं वृष्यमेव च ॥
पीतं कासं सुप्रशस्तं शुक्रलं बलवर्द्धनम् ॥ २९७ ॥
मुजह्री मुबही शक्तिद्वयमत्र स्फुटं स्मृतम् ॥
समीरसंभवां हंति वेदनां कटिपृष्ठयोः ॥ २९८ ॥
अतियोगाच्छिरःपीडां कण्ठग्रहमथाऽपि वा ॥
रदनच्छदरोगांश्च विदधाति न संशयः ॥ २९९ ॥

टीका-रदनाना तच्छदयोश्च । खुनाक कण्ठग्रहः । दर्पघ्नः २ बादाम, खशखाश । बदल किशमिश ॥

तमरहिन्दी । अम्लिका । इमली ।

पक्का पीता प्रशस्ता स्यादार्द्रा शीता गुणत्रयम् ॥
रूक्षा च द्विगुणं दग्धदोषाणां स्याद्विरेचनी ॥ ३०० ॥
विशेषतश्च पित्तघ्नी क्षुत्प्रबोधकरी पुनः ॥
पक्काशयस्य बलकृद्वान्तितृष्णानिवारिणी ॥ ३०१ ॥
वैकल्यं वर्ष्ममनसोः कामलां हृद्रुजं जयेत् ॥
अतियुक्ता फुप्फुसस्य दोषकृत्समुदीरिता ॥ ३०२ ॥
मुस्लिह् शर्बत् बनफ्शा या शर्बत् खश्खाश वा पुनः ॥
सफरा मुद्दतारिक् दग्धं पित्तं प्रोक्तं भिषग्वरैः ॥ ३०३ ॥

टीका-अन्दोह मनोवैकल्यम् खारिश कण्डूः परं तन्नाशिनी च । यर्कां कामला, मात्रा दिरम् ७।१० बदल उज्जास ।

तूतहुल्व-शीरी सुफेद खूब बुजुर्गवेदाना ।

स्वादु पीतं प्रशस्तं स्यान्निर्बीजं स्निग्धमुष्णकम् ॥
द्विगुणं बृंहणं वृष्यं तत्क्वाथो दन्तरुग्घरः ॥ ३०४ ॥

टीका-वर्ण्यं च गण्डूषतः ॥

तूत-हामिज-तुर्श स्याह ।

खूबीबदस्तूर् मामूल यथापूर्वं प्रशस्तता ॥
स्निग्धं शीतं द्विगुणितं कण्ठशोषविशेषणम् ॥
पित्तकोपप्रशमनं दाहाऽतिशमनं परम् ॥ ३०५ ॥

तत्पत्रस्वरसः पंच दिरम् दश १५ गजीदगी ॥
रतीलारा दफेसाजद् फिल्वक्त इति निश्चयः ॥ ३०६ ॥

टीका-रतीला-विषकीटविशेष ऊर्णनाभसन्निभः । सद्यस्तद्दंशविषविनाशनः । शक्तिः सुलस्यन् । दफेअ-गुलंगवीन । वदल-उज्जास ॥

तूदरी ।

रूक्षोष्णा द्विगुणं शस्ता मुजल्ली पीतवर्णयुक् ॥
लेपात्सतां विकारघ्नी मायुल् असल-योगतः ॥ ३०७ ॥
सतां-नाम्ना विनिर्णीतो विस्फोटः पृष्ठदेशजः ॥
मात्रा भू १-दिरमाऽऽख्याता श्रेयसी स्वर्णवर्णयुक् ॥ ३०८ ॥
तत्सांद्रांत्र्वक्षिण निष्पीडय नेत्रामयभयं जयेत ॥
वाबूना-तैलसंभृष्टलेपान्निक्रिसनाशिनी ॥ ३०९ ॥
दत्ते गौरीव शुम्भस्य श्लीपदस्य विपत्पदम् ॥ ३१० ॥
आभृष्टाऽरुणचूडांडपीतद्रवयुताऽसिता ॥
रमयेल्ललनावृन्दैः पुष्पेषूद्दीपनान्नरम् ॥ ३११ ॥

तूतियासफालक, संगवसरी-खर्परीतुत्थकं-खपरिया ।

शीतैकगुणमुद्दिष्टा द्विगुणं रूक्षतायुता ॥
नेत्राऽऽमयघ्नी सम्प्रोक्ता क्षालिता विधिनाञ्जिता ॥ ३१२ ॥

टीका-वदल मसावी शादनज तीनुस्तव याविस।अंजीर-तर-खुश्क-फल्गुफल-मार्द्रं शुष्कं च ॥

आर्द्रमेकगुणं शीतं शुष्कमुष्णं तथा स्मृतम् ॥
स्निग्धतारूक्षतासाम्यं धत्ते पीतं सितं वरम् ॥ ३१३ ॥

टीका-मातदिल् दरखुश्की तरी ॥

निर्बीजमतिपक्कं च प्रशस्तं भिषगीरितम् ॥
दग्धं कफं तृषं हंति स्वरतां कण्ठहृद्भवाम् ॥ ३१४ ॥

टीका-खशूनत् हल्क सीने ॥

अश्मरीं मूत्रकृच्छ्रं च शर्करां पृष्ठवेदनाम् ॥
शुनो विषं वृश्चिकस्य रतीला नामकस्य च ॥ ३१५ ॥

निहन्याद्वीर्यकृत्पुष्पकार्मुकोद्दीपनं परम् ॥ ३१६ ॥

टीका-रेगगुर्दा मसाना शर्कराश्मरीत्यर्थः। गजीदगी सग दीवाना विक्षिप्तशुनो विषम्। अकरव कजदुम् वृश्चिकः। रतीला ऊर्णनामसदृशः कीटः। वाहरावरअंगेजानद् कामं वीर्यं च वर्द्धयेत्। शिकम् विरानद् उदर रेचयेत्॥

सिद्धं सिर्का-द्रवे शुष्कं भावितं फलपञ्चकम् ॥

प्लीह्नि राज्ञावदेन्नित्यमर्वाग्वै प्रातराशनः ॥ ३१७ ॥

टीका-पज ५ अदद अंजीर खुश्क व वक्तशव दर सिर्केपर्वर्दपेशतर अज ताम-सुवह बुखुरद इत्यर्थः॥

फलानां पञ्चदशकं सिर्का-युक्तं प्रलेपतः ॥

प्लीहवृद्धिं च पारुष्यं हन्याद्वज्रो नगं यथा ॥ ३१८ ॥

टीका-पांजदह १५ अदद कोफ्ते दर सिर्के नीमगरम् तिला जमाद कुनद सलावत् तिहाल याने सख्ती सिपूर्ज् आंरातहलील दिहद मजर्रत् व मादे रसानद्। दर्पघ्नी शिकंजवी॥

इति तृतीयो वर्गः ३.

## अथ वर्गश्चतुर्थः ४.



### रदीफ से।

समल्किवर, किवर।

उष्णं च द्विगुणं रूक्षं चतुर्गुणमुदाहृतम् ॥

सिर्का-लवणयोगेन भावितं तु प्रलेपतः ॥ ३१९ ॥

यकृद्रोधं प्लीहवृद्धिं पारुष्यं शमयेद् ध्रुवम् ॥ ३२० ॥

टीका-खूब कोचक-शस्त क्षुद्रम्॥

सूम, सीर। लहसन-रसोत।

उष्णस्त्रिगुणितं रूक्षस्तथैव परिकीर्तितः ॥ ३२१ ॥

बलासकासनिखिलपवमानाऽऽमयापहः ॥ ३२२ ॥

शिफापत्रकषायेऽस्य स्थितिरार्तवसारिणी ॥

जरायुं जठरस्थां च निःसारयति वेगतः ॥ ३२३ ॥

सोऽतियुक्तः शिरःशूलं विधत्ते रक्तकोपनः ॥
निर्णीतो बद्ल प्राज्ञैः पलांडुरसितेतरः ॥ ३२४ ॥
यथादोषं स्मृता मात्रा दर्पघ्नं पललं स्मृतम् ॥ ३२५ ॥

इति चतुर्थो वर्गः ४.

# अथ वर्गः पंचमः ५.

## रदीफ जीम्।

### जावरसः, कावरस। बाजरा–धान्यविशेषः।

शैशिर्यौष्ण्ये समो रौक्ष्ये द्विगुणः समुदाहृतः ॥
शक्तिः काबिज जीर्णश्चेदजीर्णस्तु सरो भवेत् ॥ ३२६ ॥
कुव्वत् मुजश्फिफ प्रोक्ता मुदिर्र अपि संमता ॥
परीपाके गरिष्ठः स्याद्रक्तकोपप्रवर्तकः ॥ ३२७ ॥
अल्पसारोऽस्य दर्पघ्नं क्षीरं मधुरमुच्यते ॥ ३२८ ॥

### जावशीर, गावशीर।

गावशीर–समाख्यस्तु निर्य्यासोऽश्वरवृक्षजः ॥
निसर्गे त्रिगुणं रूक्षोष्णश्च शक्तिर्मुलत्तिफ ॥ ३२९ ॥
मुफत्तिह मुगश्शी च मुहल्लिल मुदिर्र च ॥
शस्तः कुंकुमवर्णाभः स्वरसः शीघ्रमंभसि ॥ ३३० ॥
मथितो लयमायाति निस्तुषः सूक्ष्मकाष्ठजः ॥ ३३१ ॥
आर्द्रः श्वेतोऽपरः पीतो नीरपिष्टः पयोनिभः ॥
मात्रा नीम दिरम् प्रोक्ता सकवीनज् बद्ल् स्मृतः ॥३३२॥
समग जैतून् वाख्यातो बद्ल प्राणिहेतवे ॥
वजेमुफासिल्–नामानं संधिभेदं नियच्छति ॥ ३३३ ॥
सुदाव बल्गमी नाम शिरःशूलं हिमं तथा ॥
इस्तिस्का जठराऽऽतंकं तक्कीरुल्बोल–नामकम् ॥ ३३४ ॥
बिंदुशो मूत्रणं मूत्रकृच्छ्रं गर्भाऽऽशयोद्भवम् ॥
पारुष्यमश्मरीशूलं कुलिंज इति नाशयेत् ॥ ३३५ ॥

१ देरहज्म

जद्वार-निर्विषी । निरविसी ।

बनफ्शजीरंग-समा प्रशस्ता धनेशदिक्संभवदक्षवीर्य्या ॥
क्ष्माभृद्भवा गोपयसा निपीता चराऽचरं हंति विषं प्रलेपात्॥ ३३६॥
माषोन्मिता कोष्णगुलाब-युक्ता पक्काशयाऽर्तिं सकलं च शूलम्॥
तथाऽश्मरीं शर्करया समेतां कृच्छ्रं च मूत्रस्य निराकरोति॥ ३३७॥
चातुर्थिकं चापि विशेषभुक्ता क्षतं विधत्तेंत्रभवं नराणाम् ॥
दर्पोहृतिर्गोपयसा भिषग्भिस्तथाऽयसा तप्तगुणेन कार्य्या ॥ ३३८॥

**टीका**—चातुर्थिको ज्वरः ॥

जजमाजज, कजमाजू, समतुल्लुरफा । छोटीमाई ।

शीतमेकगुणं रूक्षं द्विगुणं पीवरं वरम् ॥
सिर्कायुक्तः प्रलेपोऽस्य प्लीहवृद्धिं नियच्छति ॥
नसुद्भूतं रक्तपित्तं नस्यतो हंति तत्क्षणात् ॥ ३३९ ॥

**टीका**—चहार ४ दिरम् हमराहशर्वत् हव्वलास विनीशद पिबेदित्यर्थः । नफसुल्दम रक्तनिष्ठीवनम् । इसहालमुजमिन चिरकालीनाऽतिसारसंग्रहण्यौ । सयलानरतूवतरिहम् सोमक्लेदः समस्तानामयान्निहन्ति । मात्रा दिरम् २ ।

जुफ्तुवलूत ।

रूक्षं हिमं चैकगुणमार्तवस्य प्रवर्तकम् ॥
अन्त्रक्षतहरं ग्राहि मात्रा मिस्काल-मानतः ॥ ३४० ॥

जुलनार, गुलअनार-दाडिमीकुसुमः ।

प्रथमे शीतवीर्य्यं च रूक्षं द्विगुणमीरितम् ॥
अतीसारघ्नमन्त्राणां क्षतपूर्तिकरं स्मृतम् ॥
रदनाऽर्त्तिहरं क्वाथगण्डूषैर्मुखपाकताम् ॥ ३४१ ॥

**टीका**—स प्रायः श्रेष्ठः शोणाभोऽनेकदलावृतपुष्पप्रधानः किंतु फलेग्रहिः, सर्वर्तुभवो दाडिमीतरुः द्रुमांतरवद्वन्योपि ॥

दिरमद्वयमादिष्टा मात्रा चूर्णे कषायके ॥
प्रशस्तं फारसी मिस्री नाऽग्निभं हप्स कब्ज कृत् ॥ ३४२ ॥
चिल्गोजा मग्जबादाम दर्पघ्नमभयं स्मृतम् ॥
बदल् किल वै तरासीस मुजल्ली-शक्तिमण्डनम् ॥ ३४३ ॥

जजर, जर्दक-गृंजनम् । गाजर ।

वीर्योष्णमेकगुणितं द्विधा स्निग्धं हिमं तथा ॥
बदल् शलाम् समुद्दिष्टो दर्पघ्नं कांजिकं स्मृतम् ॥ ३४४ ॥
कथितं मुनइज् शक्तिचतुष्टयमिति क्रमात ॥
मुलत्तिफ् मुबही चाऽपि देरहज्म गुरु स्मृतम् ॥ ३४५ ॥

जलूज, चिलगोजा । चकारस्य जकारेंतर्भावः ।

समं चतुर्द्धा भेदेषु प्राकृतेषु निरूप्यते ॥
मुलय्यन् मुबही शक्तिद्वयं रंजनमंजितम् ॥
मात्रा यथाबलं प्रोक्ता बलकृद्धृदयादिषु ॥ ३४६ ॥

जन्तियाना रूमी-पाषाणभेदः ।

रूमी रक्तप्रभः शस्तः सुरभिस्त्रिगुणोष्मभृत् ॥
रूक्षो द्विगुणितः प्लीहयकृतोर्भेदरोधकः ॥
दंशघ्नो विषकीटानां रजोमूत्रप्रवर्तकः ॥ ३४७ ॥
दर्पघ्नी हील खुर्द स्याद् द्राक्षा वा गोस्तनी स्मृता ॥
तुख्मकांकनज प्रोक्तो बदल् वस्तिविशोधने ॥ ३४८ ॥

किंच-

मुस्लिह् रेवन्द बदल जराबिन्द उदाहृतः ॥

टीका-जराबिंद तबील मुख्यं मुदहरिज मात्रा दिरम मिस्काल ॥

चोबचीनी ।

रूक्षोष्णा चोत्तमा गर्म्याचोबचीनी गुण ३ त्रयम् ॥
सोहूहन् विचूर्णिता सम्यग्राजार्हा कामवर्द्धिनी ॥ ३४९ ॥
मात्रा प्रयोगयोग्या स्याद्दार्चीनी बदल स्मृतः ॥
बंदोबस्त-प्रयुक्तैका खुलासा-चाऽपरा मता ॥ ३५० ॥
मुरग्गम् शोरवा दर्पनोदनोऽस्याः प्रकीर्तितः ॥
श्लेष्माऽनिलघ्नी हेमंते वर्ण्या कांतोत्सवाऽर्थदा ॥ ३५१ ॥

जुंदबेदुस्तर ।

जुंदबेदुस्तर ख्यातो बेदुस्तर अपि स्मृतः ॥
आसव च नामधेयश्च मुष्के वारि नरस्य सः ॥ ३५२ ॥

शस्तो वृषणयुग्मेन स लघो जतुकाष्ठवत् ॥
मेदोगंधो लघुश्चाऽपि भिन्नोंतःश्लक्ष्णमेचकः ॥ ३५३ ॥
शक्तियुग्ममिहाख्यातं मुलत्तिफ मुदिर्रं च ॥
दर्पघ्नं क्षीरमाजं स्यात्षड्ग्रंथा बदल स्मृतः ॥ ३५४ ॥
रूक्षोष्णस्त्रिगुणं कम्पं शैथिल्यं शीर्षवेदनाम् ॥
ग्लानिं पक्षवधं चाऽपि शैशिर्य्यप्रभवां जयेत् ॥ ३५५ ॥
धूपो गर्भाशयं प्राप्तो जरायुं मृतबालकम् ॥
निःसारयति वेगेन विद्धकंटकवत्क्षणात् ॥
मात्रा रुवे ४ दिरम् पूर्णा कुश आजं पयः स्मृतम् ॥ ३५६ ॥

टीका–दिरम् तुरीयांश इत्यर्थः। राशा–कंपः। खदर–करणशैथिल्यम्। सुदाय–शिरोऽर्त्तिः। नसियान–विस्मृतिः। गशियान–उत्क्लेदः। फालिज–पक्षवधः। मशीमा–जरायुः।

जोज चारमाज् गिर्दगान–अक्षोटः।

द्विगुणोष्णं गुणद्वंद्वे समं स्निगधं मतांतरे ॥
मज्जाऽस्य कांजिकापीतः सरः क्रिमिहरो द्रुतम् ॥ ३५७ ॥
सेवनं हरते व्याधिं विषद्वयसमुद्भवम् ॥
अशीतप्रकृतौ नेष्टो दर्पघ्नी तु शिकंजवी ॥ ३५८ ॥

जोज–नारिकेलम्।

स्निगधं शीतमुष्णं चाऽपि समं चापि मतांतरे ॥
रेतःप्रवर्द्धनं कामदीपनं सूतिकाहितम् ॥ ३५९ ॥
मात्रा यथाऽग्निसामर्थ्यं क्षीरेणोष्णेन सेविता ॥
रक्तप्रसादनं वातशमनं विदधाति च ॥ ३६० ॥

जोजबुवा। जातीफलम्। जायफल।

रूक्षोष्णं त्रिगुणं हिक्काकासश्वासज्वराऽपहम् ॥
ग्रहण्यर्शोविकारघ्नमास्यवैरस्यनाशनम् ॥ ३६१ ॥
गर्की वारिनिभघ्नं यद्रेतस्स्तंभकरं पुनः ॥
यकृत्पक्वाशयादीनां बलकृन्मूत्रकृच्छ्रजित् ॥ ३६२ ॥
निशात मदपर्य्यायस्तत्करं कान्तिकारि च ॥

मात्रोत्तमा संख्ययैकं १ प्राज्यं सद्यः शिरोऽर्तिकृत् ॥
दर्पघ्नी च आविहीवी जातिपत्री बदल् मतः ॥ ३६३ ॥

जोज-मासिल । कनकफलम् ।

रूक्षं चतुर्गुणं शीतं त्रिगुणं चित्तहृत्परम् ॥
मुखद्दिर मुगश्शी च मुनक्की च मुनव्विम ॥ ३६४ ॥
मुकयी च महोदाराः शक्तयः पञ्च विश्रुताः ॥
अतिमात्रं शिरःशूलं विदधाति भृशं पुनः ॥
कार्या समज्ञा दर्पघ्ना नस्ये प्राशे बुधैः स्मृतः ॥ ३६५ ॥
गलग्रहं संतनुते च रौक्ष्यात्कृष्णं विषं चोपविषं सितं स्यात् ॥
क्षीरं स्वभावोष्णमथाऽऽज्यपानं दर्पघ्नमेतस्य बुधा वदंति ॥३६६॥

जोजकयी । मदनफलम् ।

रूक्षोष्णं द्वित्रिगुणितं वामकं रेचकं तथा ॥
मात्रा दिरम १ पर्याप्ता हंति पक्षवधार्दितम् ॥ ३६७ ॥

टीका-मुसहिल् मुस्तफ्रिग़ बल्गम् । दर्पघ्नी रुब्बसूस समगवी ॥

जोज-सरो । अकारवर्गे प्रागेव प्रोक्तं ह्रीवेरमिति ॥

इति पंचमो वर्गः ५.

---

## अथ वर्गः षष्ठः ६.

### रदीफ हे ।

हब्बलनील । मिर्चाई ।

रूक्षोष्णा त्रिगुणं दोषचतुष्टयविरेचनी ॥
क्रिमिघ्नी कुष्ठहन्त्री च मात्रा १ मिस्काल-मानतः ॥ ३६८॥
बदल् तुर्बुद-संख्याता विशालाप्यथवा भवेत् ॥
दर्पनाशाय सव्यूष निर्णीतो निपुणैर्नरैः ॥ ३६९ ॥

हब्बसमनय । प्रियालमज्जा । चिरौंजी ।

स्निग्धोष्णस्त्रिगुणं स्थौल्यकरः शुक्रविवृद्धिकृत् ॥
उद्दीपनः प्रसूनेषोर्मात्रा मिस्काल-पञ्चकम् ॥

बदल् कुंजद बादाम पिस्ता प्रोक्ताः पुरातनैः ॥ ३७० ॥
कन्द स्याद्दर्पनाशार्थं प्रभूतं शीर्षजाड्यकृत ॥

हब्ववलसां।

रूक्षोष्णं द्विगुणं कीटदंशघ्नं कासहासकृत् ॥
अपस्मारहरं चाऽपि शैत्यशीर्षरुजं जयेत् ॥
गृध्रसीनाशनं वस्तिदोषकृत्प्रचुरं यदि ॥ ३७१ ॥
कतीरा दर्पलोपार्थं हब्वल्वां बदल स्मृतः ॥
ऊदविल्सां सलीखा च जातिपत्री पुनस्तथा ॥
क्षुलत्तिफ मुजह्वी च मुकव्वी कविद स्मृतः ॥ ३७२ ॥

हब्व–असवद–शोनीज। कलौंजी।

टीका–अतः पर शकारवर्गे वक्ष्यते ॥

हब्व, कुतुन, पंबेदाना कार्पासमज्जा। बिनोला।

स्निग्धोष्णमेकगुणितं पौष्टिकं श्वासकासजित् ॥
स्वेदनात्पवनं हंति व्याधिभूतं पृदाकुवत् ॥ ३७३ ॥
शस्तं पीनं समज्जः स्यात्कोष्ठमार्दवकारकम् ॥
बदल कुंजद निर्दिष्टः स्वेदे प्राशे भिषग्वरैः ॥ ३७४ ॥

टीका–वनफशा–दर्पशातनः ॥

हब्वलगार।

रूक्षोष्णं त्रिगुणं हिक्कां पक्षाघाताऽर्दितं हरेत ॥
मिस्काल–युगलं २ मात्रा शैथिल्याऽऽनाहनाशनम् ॥ ३७५॥
तमहुद मिग्सरीही फालिज लक्वा–निषूदनम् ॥
तद्दर्पघ्नं बिहीदाना गुणवेदिभिरादृतः ॥ ३७६ ॥
आमशूलं कोष्ठवातं प्राशनाद्धन्ति सत्वरम् ॥
बदल् बादामतलूख स्याद्दर्पघ्नं तमर स्मृतम् ॥ ३७७ ॥

हब्व–काकनज।

रूक्षं शीतं द्विगुणितं शस्तं शोणं च पीवरम् ॥
हंति वस्तिगतातंकानुपदंशमथाऽपि वा ॥ ३७८ ॥

इनबुः सालिब ख्यातो बद्ल् एतस्य सत्तमैः ॥
गुलाब्र-कुसुमं दर्पक्षयदक्षं प्रचक्षते ॥ ३७९ ॥

हव्व-सलातीन-हव्वमलूक । अजेपाल ।

रूक्षोष्णं त्रिगुणं तीव्ररेचकं वामकं तथा ॥ ३८० ॥
कैश्चित्प्रतीचीभववैद्यवर्यैर्निराकृतः कोष्ठविघातकश्च ॥
सर्पिः पयस्तक्रमथाऽऽज्यपानं दर्पघ्नमेतस्य बुधा वदंति ॥ ३८१ ॥

हव्व-सफर्जल । तुरवा-आवी । बिहीदाना ।

स्निग्धं शीतं द्विगुणितं शस्तं सान्द्राम्बुदं महत् ॥
दर्पघ्नः कन्द उद्दिष्टो मात्राऽस्य दिरम-द्वयम् ॥
सवयूष बद्ल् प्रोक्तो दरत्वीद विचक्षणैः ॥ ३८२ ॥

हव्वल्करय-तुरुमकद्दू । तुंवीवीजम् ।

स्निग्धं शीतं द्विगुणितं स्वादुनीरेण वर्द्धितम् ॥
शस्तं तृष्णाऽस्रपित्तघ्नं प्रलापज्वरनाशनम् ॥ ३८३ ॥
दिरम ३-त्रितयं मात्रा दर्पघ्नो दीप्यकः स्मृतः ॥
कूष्माण्डवीजं बद्ल संख्यातो भिषगुत्तमैः ॥ ३८४ ॥

हव्वजलम् । वबूलवीजम् ।

रूक्षं शीतं द्विधा शक्तिर्मुबही चाऽपि काबिज ॥
मुम्सिक् तथा निगदिता शस्तमार्द्रमुदाहृतम् ॥ ३८५ ॥
दर्पघ्नी शर्करा प्रोक्ता बद्ल् खश्खाश ईरितः ॥
मज्जा श्रीफलसंभूतः शकाकुलु तथैव च ॥ ३८६ ॥

हव्वलबान-महानिंववीजम् ।

रूक्षोष्णं द्विगुणं पीतं पीनं शस्तं च गन्धयुक् ॥
दिरम-द्वितयं २ मात्रा शक्तिः प्रोक्ता मुलत्तिफ ॥ ३८७ ॥
बद्ल् सलीखा त्वक्छूलाऽर्द्धमाना जातिपत्रिका ॥
दुर्नामघ्नं च नियतं शिवा जंगी सितायुतम् ॥ ३८८ ॥

हव्वरुम्मान-अनारदाना । दाडिमवीजम् ।

शीतं रूक्षं द्विगुणितं वरं पीनं तथाऽम्लकम् ॥
रक्तपित्तमतीसारमरुचिं वमथुं तृषम् ॥ ३८९ ॥

हंति मात्राऽस्य द्विरम–द्वयं २ त्रयमथाऽपि वा ॥

बदल्‌ सिमाक विज्ञेयं वृक्षाऽम्लं यत्प्रचक्षते ॥ ३९० ॥

हब्बलजवीब । मुनक्का–नाम महती द्राक्षा तद्बीजम ।

रूक्षं शीतं द्विगुणितं सुयाह्यंत्रविकारकृत ॥

दर्पघ्नश्च कतीरा स्यात्कंठशुद्ध्यै पयो हितम्‌ ॥ ३९१ ॥

हज्रुलपपशवः–संगयशम्‌ । मणिविशेषः ।

शश्फाफ सब्ज वेश स्याद्बालानां धारणे हितः ॥

आवेशादिशमं शीघ्रं सर्पबाधाम्प्रबाधते ॥ ३९२ ॥

महिला यदि कंठदेशेऽमुं विनिबध्नाति मणिं गुणोत्तरम्‌ ॥

प्रसवे ससुखं सुतं सुतां जनयेदाशु लभेदरोगताम्‌ ॥ ३९३ ॥

यत्रकुत्र स्थितो बाधां तडित्पातभवां जयेत्‌ ॥ ३९४ ॥

हज्जल्‌–बिलोर–संगबिल्लोर–स्वच्छस्फटिकमणिः ।

कंठस्थितो हरेद्बाधां भयं दुःस्वप्नजं तथा ॥

भारतीप्रतिभाबोधं वर्द्धयेन्मेध्य उत्तमः ॥ ३९५ ॥

हज्रुलपहूद–नामाऽश्ममूत्रकृच्छ्राऽश्मरीहरः ॥

हरः स्मृतिभुवो यद्वन्निपीतस्तंडुलांबुना ॥ ३९६ ॥

हस्रम्‌–अंगूर सब्ज । आर्द्रद्राक्षा ।

शिशिरैकगुणा रूक्षा द्विगुणा रक्तपित्तजित्‌ ॥

क्षतसंधानकर्त्री च ह्यामातीसारपाचनी ॥ ३९७ ॥

आदीनवघ्नो–गुलकंद उक्तो मात्रा यथाऽभीष्टमुशंति वैद्याः ॥ ३९८ ॥

हजीज–जमर्दर । भृंगराजः ।

गुकधा शीतरूक्षोयं नयनाऽऽमयनाशनः ॥

दृष्टिप्रसादजननः पायुक्षतनिवर्हणः ॥ ३९९ ॥

टीका–रोशनी चश्मरा–मुफ्रिद गदांनद शकाक मिकअद्रा दफेकुनद सहजरा–नफेरसानद दाफेजहीर मिगसऽस्त–आमशूलाऽतिसारघ्न इत्यर्थः ॥

हुल्वाजलीश–शंबलीत । मेथी ।

रूक्षोष्णा द्विगुणं वक्षोहृद्रोगश्वासकासजित ॥

पंच ५ बाणप्रमोदाय हेमंते नाऽपरेदृशी ॥ ४०० ॥

मिस्काल-द्वय २ मानेन किंचिट्टंकणसंयुता ॥
घृष्टांभसोष्णलेपेन प्लीहवृद्धिं नियच्छति ॥ ४०१ ॥
क्वथेऽमुष्याः स्थितिः पीडां गर्भाऽऽशयभवां जयेत् ॥
रजःप्रवर्तनं चाऽपि विधत्ते वातरोगहृत् ॥ ४०२ ॥

**टीका**-शक्तिः-मुबही मुफत्तिह मुलय्यन्। मात्रा दिरम् २। दर्पघ्न-रोगन्कुस्ततलस्व। बद्ल बजर्कतां अकलीलुलमलक ।

हिलतीस, अंगोजा । वाह्लीकः । हींग ।

उष्णं च त्रिगुणं रूक्षं तीक्ष्णं श्लेष्माऽनिलाऽपहम् ॥
शूलघ्नं कासकक्षाऽग्निज्वरं चातुर्थिकं जयेत् ॥ ४०३ ॥
सिर्का युक्तप्रलेपेन दांयुःसालिब कर्षणम् ॥

**टीका**-तप्प नोबत् रुबे ४ चातुर्थिकज्वरः । दांयुः सालिब-केशपातःशुनामिव। शक्तिः मुनइज, मुदिर्रे

हिमस नखुद-हरिमंथः । चना ।

सितः शोणो द्विधा तत्र प्रशस्तः सितवर्णवान् ॥
बदर्जे अव्वल प्रोक्तो हार या बिस-सत्तमैः ॥ ४०४ ॥
मूत्रवर्चोविबंधघ्नो भृष्टः कामप्रदीपनः ॥
परीपाकं गतः काबिज् भूयिष्ठं शूलशोषकृत् ॥ ४०५ ॥
शर्करामश्मरीं हन्याद्रजोमूत्रप्रवृत्तिकृत् ॥
रक्ताभचणकक्वाथे स्थितिरप्यश्मरीं जयेत् ॥ ४०६ ॥

हितगंदम । गोधूमः ।

समं चतुर्निसर्गेषु व्रणं चर्वितलेपनात् ॥
शोषयेत्सारमेयस्य विषं हंति तथैव च ॥ ४०७ ॥
मुदिर्रे मुबही शक्ती २ मुस्लिह्-खश्खाश-भाषितम् ॥
बाकला बदला ग्राह्यो वैद्यसंकेतमार्गतः ॥ ४०८ ॥
वीर्यवृद्धिकरो वृष्यो बृंहणो ग्रहणीकरः ॥
अतिसाराकिनेऽत्यंतमप्रशस्तोऽपि वामकृत् ॥ ४०९ ॥
पीनः सितः प्रशस्तः स्यात् मुलय्यन् मुंजिज क्रियः ॥४१०॥

हिर्मिल, इसबंद, सोंख्तनी ।

रूक्षोष्णस्त्रिगुणं शस्तः पीनो रक्तस्तथा नवः ॥
धूपनात्सूतिकाबालदृष्टिदोषाऽपकर्षणः ॥ ४११ ॥

टीका–शक्ती २ मुलत्तिफ मुमसिक् । दर्पघ्नम्–मेवे तर । बदल–तुख्मसुदा व किर्दमानां–तुरमतुख ॥

हुमाम । कबूतर । पारावतः ।

रूक्षोष्णं कामदं कव्यं बलवीर्य्यविवर्द्धनम् ॥
गृहे यस्य वसेन्नित्यं पत्री पारावताऽभिधः ॥
पक्षाघातश्च संन्यासो मूर्छा तं न प्रबाधते ॥ ४१२ ॥

टीका–राशा नाशाय सत्वरम् । सक्ता–संन्यासः ॥

हंजल । इन्द्रवारुणी । इन्द्रायन ।

रूक्षोष्णं त्रिगुणं शस्तं पीतं पक्कं नवं महत् ॥
रक्तप्रकोपकारि स्याद्दोषाणां रेचनं परम् ॥ ४१३ ॥

टीका–खसूस बलगम्–राअजरसहाली–खारिजगर्दानद । विशेषतः सांद्रश्लेष्म-विरेककृत् । मात्रा–नीमदिरम् । मात्रा–शहम याने गीर दिरम् १ । दर्पघ्नानि–कतीरा आवी सबयूष मस्तगी निशास्ता बदल ॥

हिर्मिल–हुजुज । हल्हुल । रसांजनम् । रसोत ।

समं वीर्यद्वये रूक्षमेकधा नेत्रयोर्हितम् ॥
मुहल्लिल् कब्ज हाबिस् दम् शक्तित्रयसमन्वितम् ॥ ४१४ ॥

टीका–दम् खून दर्पघ्नर्गस । बदल फूफल संदल अहमर मामीशा अकाकि या जाफराँ ॥

हाशा किस्म पोदीना कोही–वाजे मेगोयंद किवरगाहिर्मिलदश्ती ।

रूक्षोष्णं त्रिगुणं शक्तिर्मुलत्तिफ मुफत्तिह ॥
मुकत्तय् बलगम ख्याता मात्राऽस्य दिरम–त्रयम् ॥ ४१५ ॥
दर्पघ्नानि तवाशीर वरगसातर एव च ॥
अकहूवानऽथ बाबूना वैद्यवर्य्यैः प्रकल्पिताः ॥ ४१६ ॥

हिना–महिन्दी ।

द्विगुणं रूक्षशीता स्यादोर्द्रा शस्ता नवा हरित् ॥
शक्तिः काबिज लेपेन व्रणं पाकं विना हरेत् ॥ ४१७ ॥

अष्टाऽवशेषः पत्राणां कषायःससितोपलः ॥
ईषद् गुलाब-युक्पीतः कोष्ठशूलनिबर्हणः ॥ ४१८ ॥
कण्ठग्रहकरी ग्राज्या कतीरा दर्पहा स्मृतः ॥
रुव्वसूस तथैव स्याद् बनफ्शा बदल् आहृतः ॥ ४१९ ॥

हस्क खार खश्क । वनश्रृंगाटः । गोखरू ।

रूक्षं शीतं समं केचिद्द्विगुणं निगदंति च ॥
वस्त्याऽऽमयघ्नो वातघ्नः प्रशस्तः शस्तभूभवः ॥ ४२० ॥
विशेषतः कनीयांस्तु कण्टकद्वयलक्षितः ॥
सक्षीरक्षोदतो वृष्यो बृंहणो वीर्यवर्द्धनः ॥ ४२१ ॥
मुफत्तिह् मुलय्यन् मुनक्की मुकव्वी
नऊज प्रदात्री तथा पञ्चमी स्यात् ॥
इमाः शक्तयः पञ्च पञ्चास्य तुल्या
अतुल्या भिषग्भिः प्रकीर्तिं प्रणीताः ॥ ४२२ ॥
दर्पघ्नः कुंजद प्रोक्तो बूजीदां बदल स्मृतः ॥
मात्रा दिरम् सप्त ७ दश १० क्षोदे काथे क्रमाद्विदुः ॥ ४२३ ॥

हलजून गोशमाही शंज । शंखः ।

अपक्कः शिशिरो रूक्षो भस्मोष्णं द्विगुणं स्मृतम् ॥
शक्तिर्मुजफ्फिफ ख्याता दर्पघ्नी गोस्तनी स्मृता ॥ ४२४ ॥
मात्रा युक्ता यथा ग्राह्या बदल सदफ् संस्मृता ॥
अजीर्णश्वासकासघ्नं भसितं संप्रकीर्तितम् ॥ ४२५ ॥

इति षष्ठो वर्गः ६.

# अथ वर्गः सप्तमः ७.

## रदीफ-खे ।

ख़वसुलहदीद, अशखार, चरकपोलाद, रामआहन् । मंडूरः ।

सूक्ष्मं श्लक्ष्णं प्रशस्तं च रूक्षोष्णं द्विगुणं स्मृतम् ॥
बिंदुशो मूत्रणं प्लीहपारुष्यांत्रक्षतं जयेत् ॥ ४२६ ॥

टीका-शक्तिः-मुजफ्फिक रतूबात मुहल्लिल् औराम ॥

मीनध्वजोत्सवं दत्ते छिक्किकाऽर्द्रकसंयुतम् ॥
भावितं क्रियया वैद्यैः सेवितं पांडुरोगजित् ॥ ४२७ ॥
सिर्का--द्रवे भावनीयं शोधितं चुंबकाऽश्मना ॥
छायाशुष्कं समाच्छाद्य पक्षमेकमहर्निशम् ॥ ४२८ ॥

टीका--सिर्का--अंगूरी हजरुल मिकनातीस संग आहन्रुबा--चुंबकाश्मा ॥

बादाम स्नेहसंभृष्टं सेवितं स्मरदीपनम् ॥
मुदव्वर्--भावितं दर्पहरं सर्पिः बदल् स्मृतम् ॥ ४२९ ॥

टीका--भावितस्य इतरीफल ॥

स्वरूप-वेदअंजीर । अरंड ।

उष्णो द्विधा त्रिधा रूक्षः शूलं पक्षवधार्दितम् ॥
संधिवाताद्यशीतिं च हन्यात्संस्वेदनाऽशनात् ॥ ४३०
त्रीणि षण्णवबीजानि मधुना क्रमशो लिहन् ॥
देहशुद्धिं लभेद्देही रेचनात्कफवातयोः ॥ ४३१ ॥
निद्राप्रदं कज्जलमंजनं स्यात् त्रिदोषकद्रूभवताक्ष्यतुल्यम् ॥
अहृद्यमत्यन्तकृतं कतीरा त्वमुष्य दर्पघ्न इतीरयंति ॥ ४३२ ॥
मुहल्लिल मुजह्नी च मुलय्यन् शक्तयः ३ स्मृताः ॥
बदल् मूलकबीजं स्यान्निर्गुण्डीबीजमित्यपि ॥ ४३३ ॥

खरातीन । किरम् गिलखोर । गण्डूपदः ।

रूक्षोष्णस्त्रिगुणं शुष्कस्तिलतैलेन लेपनात् ॥
मेहनस्य भवेद् वृद्धिः पुंभावश्चोपचीयते ॥ ४३४ ॥

टीका--कुव्वत्--मुलहम्--मांसरोहिणी सवर्द्धिनी च शक्तिरित्यर्थः । मुस्लिह बादाम-शीरी । बदल देवचा जलौका--जोंक ।

खरदिल । राजिका । राई ।

राजिका त्रिगुणोष्णा च रूक्षा नस्येन क्षुत्करी ॥
अंड्यस्त्राण्डद्रवैर्लेपात्कुष्ठकाष्ठविभावसुः ॥ ४३५ ॥
क्षौद्रेण सेविता श्वासं कासं शैत्यमथान्तरम् ॥
बल्गमस्रंसिनी कोष्ठाद्धन्ति पक्षवधार्दितम् ॥ ४३६ ॥

मन्मथोद्दीपिनी चाऽपि सम्मवेदामपाचनी ॥
पटुयुग्वांतिकृल्लेपान्मुहल्लिल्–शक्तिधारिणी ॥ ४३७ ॥
रक्तवाजिगेरलस्य कुड्मलं तक्रपिष्टमथ राजिकायुतम् ॥
लेपनादलिकवेदनाऽपहं कोष्णमाशु गदितं भिषग्वरैः ॥ ४३८ ॥
सिक्थकं घृतमथाजमेदसा योजितं हरति मर्दनाद्द्रुतम् ॥
मारुतोऽल्पकफसंभवान्गदान्राजिकायुतमुदीरितान्पुरा ॥ ४३९ ॥
सिध्मानं प्लीहवृद्धिं च ग्रंथिं गण्डापचीं हरेत् ॥
सद्योऽपक्का च पक्का वा शोषयेत्पाचयेदपि ॥ ४४० ॥
शिकंजवीं–गन्धकयुक्प्रलेपः पामाविसर्पाऽनिलसर्पतुल्यः ॥
अस्याः प्रतीसारणमुग्रवेदनां वाताद्रदानामपि गंधयुक्तम् ॥४४१॥

**टीका**—हरेदिति शेषः । अशोर्थां दन्तवेदनाम् । शक्तिः मुहतरिक–विदाहिनीत्यर्थः ।
खूब गुलिस्तानी ताजे सुर्ख किवादऽजकोफ्तनजर्दगर्दद ॥

अस्याऽर्थे श्लोके विशेषश्च कश्चित् ।

प्रशस्तोद्यानजा सद्योभवा पुष्टा सशोणिमा ॥
पिष्टा पीता भवेत्तिक्ता कटुस्तीक्ष्णा च वांतिकृत् ॥ ४४२ ॥

**टीका**—मात्रा मिस्काल १।२ ॥

मुस्लिह् गुलाब कर्पूरलवणाऽर्जुनचन्दनम् ॥
बंदल् हब्बारिशाद् तुख्मशलाम् प्रोक्तश्च सूरिभिः ॥ ४४३ ॥

ख्वर्बक–अस्वद । कटुरोहिणी ।

रोहिणी त्रिगुणं रूक्षा तथोष्णा कामलापहा ॥
पित्तज्वरप्रशमनी तुर्यदोषविरेचनी ॥ ४४४ ॥
यावच्छक्यं प्रतीकारे न दद्याद्वैद्यसत्तमः ॥
दवासम्मी समाख्याता त्यक्ता प्रत्यक्चिकित्सकैः ॥ ४४५ ॥
लेखनी बलहृच्छस्ता मध्यमा न कृशाऽकृशा ॥
ग्रंथिला श्यामला लध्वी सूक्ष्मतन्तुयुता तनुः ॥ ४४६ ॥

**टीका**—मात्रा दिरम् नीम या १ ॥

दर्पघ्नोऽस्याः कतीरा या शीरीबादाम एव वा ॥
बदल् कुंजद वाऽऽदिष्टो मांजर्यून् नीम-मात्रया ॥ ४४७ ॥

खर्बक अवियज । अरुणा-भेदविषः ।

रूक्षोष्णा द्विगुणं शक्तिर्मुकव्वी काविज स्मृता ॥
जोजकप् बदल ख्यातो मस्तगी दर्पहारिणी ॥ ४४८ ॥
मात्रा नीमदिरम् प्रोक्ता खूब लबूदार उच्यते ॥ ४४९ ॥

खस तुख्म काहू-उशीरबीजं च ।

त्रिगुणं स्निग्धशीतं च हरवत्पुष्पधन्वनः ॥
मुदिरम् मुनव्विम प्रोक्ते शक्ती पाके लघु स्मृतम् ॥ ४५० ॥
उदन्याहृत्प्रमेहघ्नं शस्तमार्द्रे सुभूमिजम् ॥
मुस्लिह् करश्स पोदीना मात्रा मिस्काल-युग्मकम् ४५१॥
कासनी बदल प्रोक्तः प्रलेपान्मौलिशूलनुत् ॥
दवथुज्वरपित्तघ्नं वांत्यतीसारनाशनम् ॥ ४५२ ॥

खशखाश-अवियज ।

अहिफेनं सितं बीजं कोकनार अपि स्मृतम् ॥ ४५३ ॥
स्निग्धं शीतं द्विगुणितं रूक्षं चाऽपि मतांतरे ॥
स्नेहयुक्तं परीपाके रूक्षं दृष्टं भिषग्वरैः ॥ ४५४ ॥
रक्तनिष्ठीवनं हंति क्षवथुं वातपित्तजम् ॥
पीनसं च प्रतिश्यायमतीसारं निरामजम् ॥ ४५५ ॥
सितोपलः क्षौद्रमथाऽस्य दर्पहृत्तथा लिसानुलहमल प्रकीर्तितः ॥
शवप्रसूनाऽपि च मस्तगी परं बादामशीरी बदल प्रणोदितः ४५६॥

खशखाश-अस्वद् ।

यन्मेचकं पूर्वसमं गुणैः स्यात्सीमंतिनीसोमहरं च पुष्टिदम्॥
निद्राप्रदं रोगन नस्यसेवनात्पूर्वोदितं शेषमुशंति वैद्याः ॥४५७॥

खुसिपतुः-सालिब ।

प्रशस्ता पीवरा मिष्टा गंधवर्णेन वीर्य्यभा ॥
रेतोलाभकरी शीघ्रं प्रसूनेषुप्रमोदकृत् ॥ ४५८ ॥

स्निग्धोष्णा द्विगुणं गुर्वी वाताऽऽतंकनिबर्हिणी ॥ ४५९ ॥

टीका–तमहुद तशन्तुज–देहस्याध्मानसंकोचौ वातविकारौ । धात्रीफलं दर्पहरं वदंति । बदल बूजीदां या तुख्मतरबूज या तुख्मअंजरा या बेशतरसकनकूर या शकाकुल मात्रा दिरम् १ ॥

मुबही मुनहूज् शक्तिद्वंद्वमत्युग्रमीरितम् ॥ ४६० ॥

खव्वींजी–खतमी ।

खव्वींजी खतमी युग्मं क्षुद्राक्षुद्रप्रसूनभृत् ॥
उभयं सितशोणं स्यादन्योन्यं बदल स्मृतम् ॥ ४६१ ॥
स्निग्धशीतैकधा रेकात्संधिभेदं व्यपोहति ॥
स्वेदनात्पायुशोथघ्नी स्तनश्वयथुनाशिनी ॥ ४६२ ॥
पारुष्यं प्लीहयकृतोर्गर्भाशयभवां रुजम् ॥
मूत्रकृच्छ्रक्षतं चाऽपि पायुमेहनसंभवम् ॥ ४६३ ॥
स्थित्या शिफाकषायोऽस्यास्तमस्तोमं शशी यथा ॥
विस्फोटघ्नी प्रलेपेन जंबूर–विषनाशिनी ॥ ४६४ ॥
सिर्का–युक्तः प्रलेपोऽस्याः कुष्ठसिध्मादिखंडनः ॥
सारघेण सनाथश्चेत्कासवातभुजंगमः ॥ ४६५ ॥
आर्द्रा प्रशस्ता गिरिजाऽर्जुनेयं सितप्रसूना महती च संमता ॥ ४६६ ॥

टीका–खूब ताजे सब्ज सुफेद गुल कोही नाशद ॥

मुंजिज् मुफत्तिह् मुहल्लिल वा मुलय्यन्
लिंगानि शक्तिविधृतानि च धारयंती ॥
दर्पापहे मधु तथा बदरीफलं वा ॥
भैषज्यकोविदनरैः परिकीर्तिते द्वे ॥ ४६७ ॥

टीका–उभयत्र वाशब्दः समुच्चयार्थः । प्रतिनिधिरपरोऽपि नीलोफर ॥

खल्ल । सिर्का ।

बेश बाशद अंगूरी रूक्षः शीतस्त्रिधा मतः ॥
पक्वाशयाय हितकृत्परं दीपनपाचनः ॥ ४६८ ॥

---

१ संहरेत् इति शेषः ।

गुलाब-युक्तगंडूषो दशनार्त्तिं हरेत्पराम् ॥
मंजिष्ठायुक्प्रलेपेन पिंडिकाव्यंगनाशनः ॥ ४६९ ॥
गौरवं कर्णयोः शोथे पातनान्नादवेदनाम् ॥
शीर्षार्तिं शमयेत्सद्यः पानीयमिव पावकम् ॥ ४७० ॥
रोगन्बादाम दर्पघ्नं शर्करा वा स्मृता बुधैः ॥ ४७१ ॥

खुमुर, शराब-वारुणी।

अंगूरीयं प्रशस्तोक्ता सुवर्णा सुरभिर्नवा ॥
मध्या चिरंतनी नानागुणैः पूर्णा त्रिधा भवेत् ॥ ४७२ ॥

टीका-शराब हदीस कदीम मुतवस्सित अतीक। कदीम-पर्यायः। इति क्रमशो भेदत्रयनामानि ॥

निसर्गसात्म्या निशि वारिदागमे साकं सरोजाननया च सेव्या ॥
आरामसंगीतविशेषबोधा क्रोधापहा स्यात्पिशितोपदंशा ॥४७३॥
नवा षाण्मासिकी दार्ढ्यं सेवनान्मेहनस्य च ॥
संविधत्ते परं वृष्या मदनोत्सवदायिनी ॥ ४७४ ॥
रूक्षोष्णा द्विगुणं श्रेष्ठा मध्यमातीववत्सरा ॥
दीपिनी पाचनी वर्ण्या प्रसन्ना रेतसोऽम्बुधिः ॥ ४७५ ॥
रूक्षोष्णा त्रिगुणं तीक्ष्णा तुर्य ४ वर्षा चिरन्तनी ॥
बलासश्वासकासघ्नी वर्द्धिनी जीवनोष्मणः ॥ ४७६ ॥

टीका-जीवनोष्मा हरारतगरीजी देहपुष्टि रतिकात विवर्द्धयेत् ॥

शक्तयः ५ पंच विख्याता मुकव्वी मुबही तथा ॥
मुफर्र मुनइज्ज चेति मुलत्तिफ इति क्रमात् ॥ ४७७ ॥

टीका-अपरेरा शराबरेहानी पूर्वोक्तगुणकल्या। मात्रा हफ्ताद ४७० मिस्काल। दर्पघ्न मेवे तुर्शतर। बदल सामान्याः सुराः ॥

खूलिंजा। कुलींजन।

रौक्ष्यमौष्ण्यं त्रिधा विभ्रदास्यदौर्गन्ध्यलेपनुत् ॥
शूलशैत्यशिरोबाधाश्वासकासबलासजित् ॥ ४७८ ॥

टीका-मुहल्लिल औराम शोथ यकृत् हाजम् तामू आहारपरिपाचकम्। कासर-रियाह गलीज-दुष्टवाताऽनुलोमनम् ॥

अहृद्यं दर्पहृन्मांसरसो मात्रा द्दिरम् १ मिता ॥
बृंहणं वृष्यमायुष्यं कामिनीनां रतिप्रदम् ॥ ४७९ ॥
मुलत्तिफ् मुबही शक्तिर्दर्पघ्नमिदमुच्यते ॥
सुधाकरः कतीरा च तृतीयं हरिचन्दनम् ॥ ४८० ॥

टीका-इदं नागवल्लीशिफेति केचित् ॥

श्रीसंज्ञं दारचीनी च बदल-द्वयमीरितम् ॥ ४८१ ॥

टीका-श्रीसंज्ञं लवंगम् ॥

खूखः-शफताल्लू ।

एकधा स्निग्धशिशिरं क्षुत्करं च तृषाऽपहम् ॥
पक्काशयोष्मशमनं पित्तक्षतजशोधनम् ॥ ४८२ ॥
प्रसृतिप्रमिता मात्रा कफे दस्त उदाहृता ॥
मुरब्बा जंजबील स्याद्दर्पनाशविचक्षणः ॥ ४८३ ॥

टीका-बदल-द्राक्षा ॥

खूबकलां याने तुख्म वारतंक ।

टीका-तबिअत् वारिद् या विस बदर्जे दोयम् २ खूब फर्वेह बागीसुर्ख रंग मायल ।

आजेन पयसा चैव ज्वरं जीर्णं निषूदयेत् ॥
बदल् तुख्मह्नुमाज स्याद्दर्पघ्नं क्षौद्रमीरितम् ॥ ४८४ ॥

टीका-खियार खुर्द बाद्यंग खीरा । लतीफतर अजखियार दराज बुवद कर्कटीफलादपि लघूत्तमा ॥

द्विगुणं स्निग्धशीतः स्याज्ज्वरसंज्वरनाशनः ॥
उष्णवातं तृषं हंति सर्वावयवतर्पणः ॥
पक्काशययकृद्दाहमूत्रकृच्छ्राऽश्मरीहरः ॥ ४८५ ॥

खियारः दराज किशा । कर्कटी ।

रूक्षेतरा हिमा स्वादुः शस्ता स्वाद्वुदकोद्भवा ॥
द्विधा वीर्ये गुणे मूले मूत्राघातं जयेद् ध्रुवम् ॥ ४८६ ॥
रक्तपित्तं ज्वरं तृष्णां प्रमेहं दवथुं तथा ॥
दर्पघ्नं मरिचं ख्यातं नमकू स्याद अपि ध्रुवम् ॥ ४८७ ॥

टीका-बदल-परस्परं फलस्य फलं बीजस्य बीजम् ॥

खियार शंबर-राजवृक्षः-अमलतास ।

कृतमालः समो वीर्ये गुणे च स्रंसनस्तथा ॥
बलाससांद्रतां हंति दग्धपित्तविरेचकः ॥ ४८८ ॥
शूलघ्नो गुडसंयुक्तः सर्पिषा योजितोऽपि वा ॥
सांद्रनीरेऽस्य गोलस्य कशनीजूतर-साधिते ॥ ४८९ ॥
शम्याकस्याऽपि संयोज्यं सारं गंडूषमाचरेत् ॥
खुनाक कंठरोधाख्यं गदं संहरति द्रुतम् ॥ ४९० ॥
कुस्तुंबुरुस्वरसकर्षितमऽस्पगोल सांद्रांबुकोष्णविहितो गलरोधरोगे ॥
गंडूषकर्म विधिना दृढपाशबंधं पित्तोद्भवं कफभवं च निराकरोति ४९१

टीका-आरग्वधसारान्वित एव गडूषः। अगर-खियार शंबररादर आबकासनी इनबुः सालिब हलकर्द अंदकें रोगन्बादाम आमेख्तह विनीशद यर्कारा जायल गर्द्दानंद ॥

कासनी इनबुः सालिब् संग्राह्यः स्वरसोऽनयोः ॥
रोगान्बदाम-संयुक्तः पीतः स्यात्कामलाऽपहः ॥ ४९२ ॥

टीका-सुपर्णकसारसयुक्त एव मात्रा ५।७।१० दिरम्, शक्तयः २ मुहल्लिल मुलय्यन मुसहिल अर्वे ४ अखलात् खसूस सफरा लजुज्वल्गमूरा । दर्पघ्नानि रोगन्बादाम शीरी मस्तगी अनेसूं उन्नाव तमरहिंदी । वद्ल ३ तुरंजवीं मबीज वेदाना अंद-केतुर्बुदः ॥

इति सप्तमो वर्गः ७.

## अथ वर्गोऽष्टमः ८.

### रदीफ दाल।

दारफिल २-कृष्णाः कणाः ।

चपला त्रिगुणोष्णा च रूक्षा वैद्यैस्तथा स्मृता ॥
पक्वाशयं कवी कुर्यान्मुबही-शक्तिसंयुता ॥ ४९३ ॥
पाचनी रेचनी चाऽपि संभवेत्कामदीपिनी ॥
सुद्देकुशा जिगर् शक्तिर्मुस्किन् औजाय-स्व च ॥ ४९४॥
हिक्काश्वासप्रशमनी बलासं ह्रासयत्यपि ॥
वातश्लेष्मज्वरं हंति वर्ष्मं शैत्यमखंडितम् ॥ ४९५ ॥

शिरसो न हिवा मुस्लिह्‌ समगऽरवी प्रकीर्त्तितः ॥
तथाऽपरे च संप्रोक्ते गुलाब हरिचंदनम् ॥ ४९६ ॥
बदल्‌ अस्याः समुद्दिष्टो ह्यषणं विश्वभेषजम् ॥
जरम्बादऽपि संख्यातस्तथा प्रतिनिधिर्बुधैः ॥ ४९७ ॥

दारचीनी–सूक्ष्मा–त्वक् ।

त्रिधोष्णरूक्षा तीक्ष्णा च सूक्ष्मा संशोधिनी हृदः ॥
श्वासकासप्रतिश्यायदृष्टिदौर्बल्यदारिणी ॥ ४९८ ॥
समीरहिक्काकफमूत्रकृच्छ्रकम्पाऽपहा चार्त्तवनोदिनी च ॥
धियं समृद्धां विदधाति सेवया बलं मनोज्ञं प्रचुरं तनोति ४९९॥
वैकल्यमाशु हरते मधुना विलीढाऽऽयुर्वृद्धिपूरिततनुं मनुजं विधत्ते ॥
मूत्राऽऽशयाऽहितकरी हितकारिणी च
वर्ण्या हिमे वदनसौरभवर्द्धिनी स्यात् ॥ ५०० ॥
शक्तयोऽष्ट विनिर्णीता मुलत्तिफ मुफत्तिह ॥
मुदिर्र मुनइज़्‌ मुम्सिक्‌ मुबही च तथा पुनः ॥ ५०१ ॥
मुफर्रह्‌कलब ख्याता मुकव्वी कबिद्‌ स्मृता ॥ ५०२ ॥

टीका–पक्वाशयस्याऽपि बलावहा स्यात् । खूब–ताजे तोमशीरीं आमेज हम्‌ अंदके–तेज–सुर्ख–शुतरीरंग ॥

श्रीखण्डं दर्पहृत्प्रोक्तं खूलिंजा जरनब्‌ पुनः ॥
असारून सलीखा च चत्वारो ४ बदल स्मृताः ॥ ५०३ ॥

दारशीशआन । कट्फलम्–कायफल ।

कट्फलं त्रिगुणं रूक्षमुष्णं चाऽपि तथा स्मृतम् ॥
शस्तं शोणं ससौरभ्यमीषत्तिक्तं सुतीक्ष्णकम् ॥ ५०४ ॥
श्लेष्मणोऽसिसमं श्वासहिक्काकासनिरासकृत् ॥
शोषणं स्वेदशैत्यस्य शक्ती २ काबिज़्‌ मुजफ्फिफ ॥ ५०५ ॥
दर्पघ्ने राजियाना च तथा दूकू समीरितः ॥
असारून जराबिंद दरूनज बदल्‌ मताः ॥

दस्रूनज, अकरवी, अनूस।

रूक्षोष्णं त्रिगुणं शक्तिर्मुलत्तिफ मुफरिंह ॥
मुकव्वी दिल् प्रशस्तं च रूमी प्रोक्तं भिषग्वरैः ॥ ५०७ ॥
मात्रा शाणार्द्धमाना च दर्पघ्नानि तु बादियां ॥
तथा कन्द निशास्ता च बदल् वक्ष्ये विनिश्चितान् ॥५०८॥
आकारकरभः सूरंजां जरंबाद एव च ॥
देवप्रसूनमपि च यथास्थानं मनीषिभिः ॥ ५०९ ॥
जगत्प्राणभवां पीडां मूत्रगर्भाशयाऽऽश्रयाम् ॥
हंति शैत्यं मनोव्याधिं शूककीटविषादिकम् ॥ ५१० ॥

दलब-दरख्त चिन्नार।

रूक्षं शीतं द्विगुणितं त्वक्फलं समुदीरितम् ॥
निक्षिप्तमनयोश्चूर्णं क्षते क्षतजशोषणम् ॥ ५११ ॥

टीका-शक्तिर्मुलाफ्फिफ् दर्पघ्नी दारचीनी। बदल-पोस्त अनार॥

बर्हिःप्लुष्टे क्षिपेच्चूर्णं वेदनाक्लेदनाऽपहम् ॥
नीरपिष्टप्रलेपेन कीटदंशविषाऽपहत् ॥ ५१२ ॥

दुहनुलहल्-रोगन्कुजद। तिलतैलम्।

उष्णमेकगुणं स्निग्धं त्रिगुणं दद्रुकर्षणम् ॥
विदग्धश्लेष्मसंभूतकण्डूविद्रावणं सरम् ॥ ५१३ ॥
कण्ठपारुष्यशमनं वह्निदग्धव्रणान्तकम् ॥
सर्षपादिभवं तद्वद्यद्वद्वीजोद्भवं भवेत् ॥ ५१४ ॥

टीका-दद्रुः-कुवा॥

दम्मुलअखबैन, रंगवर्त्त।

निसर्गरूक्षं शिशिरं द्विधा च पदायुधांडद्रवभर्जितं हि ॥
संसेवितं संग्रहणीविकारमुरःक्षतं हंति च रक्तपित्तम् ॥५१५॥

टीका-दर्पघ्नः बाबूना। बदल् अर्कांकिया॥

दूद-हरीरी। कौशेयक्रिमिः।

स्निग्धोष्णा द्विगुणं शुष्कः क्षुण्णः संप्राशितो नृभिः ॥
पीनत्वं देहमनसो वैवर्ण्ये संप्रसादनः ॥ ५१६ ॥

टीका-विधत्त इति शेषः॥ इत्यष्टमो वर्गः ८.

# अथ वर्गो नवमः ९.

## रदीफ ज़ाल् ।

### ज़ुबाब-मगस-माक्षिका ।

वरटी शूककीटाऽहिदंशदेशे विमर्दिता ॥
विषघ्नी संभवेत्सद्यो ग्लानिवांतिकरी ध्रुवम् ॥ ५१७ ॥

टीका-शक्तिः मुनफ्फिर ग्लानिप्रदा मुकयी च वरगजीदगी जंबूर कजदुम् मार विमालद फिलहाल जहरफरोगदेद ॥

### ज़हब-तिला-जर । हिरण्यम् ।

समं किञ्चिदशीतं च वर्ण्यमुद्वेगहृद्रुजः ॥
धारणादशनाद्धन्ति शुद्धं दृष्टिप्रसादनम् ॥ ५१८ ॥

टीका-जुम्ले अमराज सौदावी राद्के गर्दानद-उन्मादनिरशनम् प्रशस्तं पत्रीभूतम्-खूब वरक महलूल गैरमहलूल-मर्दितम् अमर्दितं च ॥

शुद्धं सर्वगुणोपेतं मर्दितं स्यादमर्दितम् ॥ ५१९ ॥
विश्राणनादपस्मारहरं प्राशनधारणात् ॥ ५२० ॥
क्षौद्रं मृगमदश्चेति दर्पघ्नमुभयं स्मृतम् ॥
बदल् याकूत रुम्मानी मात्रा स्यादर्धरात्रिका ॥ ५२१ ॥

इति नवमो वर्गः ९.

# अथ वर्गो दशमः १०.

## रदीफ रे ।

### रेवन्दचीनी ।

रेवन्दचीनी द्विगुणोष्णरूक्षा पक्काशयाऽर्ति पवनाऽऽमयं च ॥
शस्ता रजन्याः समशोणवर्णा हिनस्ति वस्त्याशयरेचनेन ॥ ५२२ ॥

टीका-आशयः पक्काऽभिन्नः ॥

प्लीहाऽभिवृद्धिं च तथाऽऽमशूलं प्राशात्प्रलेपादपचीं व्रणांश्च ॥
सिर्का-समेता नयति ह्यपायं कुष्ठान्मकुष्ठान्वडवा यथैव ॥ ५२३ ॥

समगवी तु दर्पघ्नो मुसहिल् मुकयी तथा ॥
मुदिर्र–शक्तयस्त्रिस्त्रः३ कथिता लोकशास्त्रयोः ॥ ५२४ ॥

रेवंदखताई ।

सैवाऽपरा किंचिदनुष्णवीर्या ह्यरिक्तुणा वस्तिविशोधनी च ॥
मूत्रोपसर्गं ज्वलितोष्णवातं कादंबिनीव क्षपयेद्दवाऽग्निम् ॥५२५॥

प्रयोगश्च–

टीका–शोरा कल्मी दिरम् १, जीरा सुफेद २, रेवंदखताई ४ संचूर्ण्य चिरं सेवयेत् ॥

क्षोदोऽमीषां क्षीरनीराऽनुपीतो माषद्वंद्वं शालिमुद्गोपभोक्तुः ॥
मूत्राघातं मूत्रकृच्छ्रप्रमेहान्सप्ताहेन द्रावयेच्चोपदंशम् ॥ ५२६ ॥
शक्तिरेका मुनक्की स्यान्मुदिर्र अपि चाऽपरा ॥
बदल अन्योन्यमुद्दिष्टो भेदयोरुभयोरपि ॥ ५२७ ॥

राजयानज–राजयान–बादियां । शतपुष्पा ।

रूक्षोष्णा द्विगुणं स्रोतोरोधःशोधविधायिनी ॥
दृष्टिप्रसादनी हृद्या शूलाऽऽमाऽऽमयकर्षिणी ॥ ५२८ ॥
आर्तवप्रेरणी वातविण्मूत्रस्तम्भभेदिनी ॥
कासश्वासप्रतिश्यायहिक्काधिक्कारकारिणी ॥ ५२९ ॥
ज्वरघ्नी विषहन्त्री च मात्रा मिस्काल–मानतः ॥
दर्पहृन्मलयोद्भूतं चंदनं सुरदार्वपि ॥ ५३० ॥

रातीनज–समग–दरख्त सनोवर ।

त्रिधोष्णरूक्षो धवलश्च किञ्चित्पीताऽवभासः सुरभिः प्रशस्तः ॥
समीरणातंकगणं हिनस्ति सुराऽरिवृन्दं गदितो गदीव ॥ ५३१ ॥

टीका–शक्तिः मुनव्वतुल्लहम् । मासरोहिणी मुजल्लीकुरूह–क्षतसन्धानकर्त्री । बदल कंद अलकुल्वतम् । दर्पघ्नम् अस्फीदज रोगन्गुल् ॥

रुम्मान, हुल्व । अनारशीरीं । स्वादुदाडिमम् ।

नोष्णं न चाऽनुष्णमुदारवीर्यं श्रेष्ठाम्बुजाऽऽभाससमानभासम् ॥
अत्यन्तशोणं रविरत्नवर्णं निर्बीजबीजं बलवर्द्धनं स्यात् ॥५३२॥
हृत्कण्ठदाहं हृदयाऽऽमयं च पक्वाशयाऽर्तिं रुधिरोपसर्गम् ॥
पित्तप्रकोपं दवथुं पिपासामुष्णज्वरं कश्मलमाशु हंति ॥ ५३३ ॥

प्रसूनचापं तनुते विनिद्रं घर्म्मे स्थितस्याऽस्य रसोंजनेन ॥
दृष्टिप्रसादं कुरुते मनोज्ञं छार्दें व्यपोहत्यपि कामलां च ॥५३४॥

टीका-तर बदर्जें दोयम् ॥

दाडिमस्य परमाऽद्भुतो गुणः स्वादुनः सुरसपानमात्रतः ॥
कंठहृद्गतमुदारसंचयं शोणितस्य तनुते विना क्रमम् ॥ ५३५ ॥

टीका-आहाररसोत्पत्तिं विनैव। रुम्मान हामिज अनारतुर्श अम्लं दाडिमम् ॥

रूक्षाऽनुष्णं द्विगुणितं मायुकोपप्रशांतिकृत् ॥
ग्राहि हंति यकृद्दाहं पक्काशयबलप्रदम् ॥ ५३६ ॥

टीका-इलतिहावकबिद् याने सोजश जिगर् रादफे कुनद ॥

नारिकेलफलं क्षौद्रं द्वयोर्दर्पघ्नमीरितम् ॥
द्राक्षाऽऽर्द्रा बदल प्रोक्तः पुराविद्भिर्भिषग्वरैः ॥ ५३७ ॥

इति दशमवर्गः १०.

# अथ वर्ग एकादशः ११.



## रदीफ जे ।

### जरंबाद । कर्चूरः । नरकचूर ।

रूक्षोष्णो द्विगुणं शस्तस्तीव्रगंधश्च पीवरः ॥
हन्याद्वातकफातंकान्संग्राही देहपुष्टिदः ॥ ५३८ ॥

टीका-शक्तिः मुकव्वीरूह याने हरारत् गरीजी रा कवीगर्दानद जीवोष्मणेऽत्यंतं बलावह इत्यर्थः। मुसहिल् सौदा ॥

प्रसारणं दंतरुजं निहंति धूपस्तु हालाहलधारिहारी ॥
क्षौद्रेण पक्षाऽपहतिं पुराणामपस्मृतिं पृष्ठकटिप्रपीडाम् ॥ ५३९ ॥

टीका-शक्त्योऽन्याश्च मुलत्तिफ, मुगश्शी, मुफर्रहे, कलब मुकव्वी कबिद मुलय्यन मादा मुबही। मात्रा दिरम् १ । दर्पघ्नं संदल सुफेद। बदल दरूनज, खशकूकर्वरी शीत्रजहिंदी-तुख्मतुरंज ॥

### जराविंद, मुडहरिज ।

त्रिधोष्णरूक्षं सौदावी बलगमी दोषरेचनम् ॥
हिक्काकुष्ठक्रिमिश्वासभ्रमाऽपस्मारभीतिनुत ॥ ५४० ॥

प्लीहशोथं पार्श्वशूलं हंति ध्वांतं यथा रविः ॥ ५४१ ॥

टीका—फवाक हिक्का । दर्दपहलू पार्श्वशूलम् । मात्रा—मिस्काल ॥

जराविंद ४ मुदहरिजतवील, नामेकिस्महमीं-दीगर् ।

त्रिधोष्णरूक्षं पूर्वस्मादधिकं किंचिदेव हि ॥

कणा मुर्रयुतं क्षौद्रे माजूनसदृशं कृतम् ॥ ५४२ ॥

कामिन्या सेवितं गर्भरजसोः प्रेरणं भवेत् ॥ ५४३ ॥

शक्विर्मुहल्लि मुदमिल् अथवा मुगश्शी

तफ़्तीह कार्य्यचतुरा च भवेच्चतुर्थी ॥ ५४४ ॥

जाफरानी पुष्टतरं करांगुष्ठसमाकृतिः ॥

प्रशस्तमुभयं तुल्यं मात्राऽस्य दिरमद्वयम् ॥ ५४५ ॥

अम्बरवारीस दर्पघ्नः अञ्जवीन अथाऽपि वा ॥

शीत्रज कुस्तजरंबाद फिल्फिलेन तथैव च ॥ ५४६ ॥

विस्फायज़ बदल स्याता अंजरूत ७ इति क्रमात् ॥ ५४७ ॥

जाज—जाग । फटकरी ।

रूक्षा त्रिधोष्णा गुणनामवर्णैश्चतुर्विधा दीप्तिमती प्रशस्ता ॥

मिश्री लघिष्ठा वरवामिनी च दध्नाऽशिता मूत्रविघातहन्त्री ॥ ५४८

दर्पघ्नमस्या भिषजो वदंति हैयंगवीनं ससितं पयोऽपि ॥

क्षारः सितः स्वर्जिकनामधेयो निर्लेखने वै बदल प्रयुक्तः ॥ ५४९

शक्यस्तिस्र उद्दिष्टाः काबिज़ मुद्दारिक मुकर्रिह ॥

शखार सर्जिकाक्षारो मस्का हैयंगवीनकम् ॥ ५५० ॥

टीका—एकाऽर्जुनवर्णा नाम्ना शिव्वयमानी १, अपरा शोणा कलकदीस २, तृतीया पालाशा कलकन्द ३, तुरीया श्यामा कलकतार ४ ॥

रुन्धेत रक्तं सहसा घ्राणात्तु घ्राणसंभवम् ॥ ५५१ ॥

जर्नीख । हर्ताल ।

पीतं च लोहिताभासं शस्तं गन्धकगन्धयुक् ॥

चतुर्गुणं च रूक्षोष्णं गरलं तीव्रभेदनम् ॥

प्रलेपान्मेदसाऽऽजेन भग्नपीडां द्रुतं हरेत् ॥ ५५२ ॥

युकादिहरणं श्रेष्ठं श्रलिप्तं मार्कवद्रवैः ॥
केशाऽप्ररोहणं सायं प्रातः कक्षमिवाऽनलः ॥ ५५३ ॥

टीका—शक्तिः मुकर्रह् याने जराहत् कुनन्दा खूब इर्मनी मात्रा पुख्तासोख्ता भस्मीकृतस्य महापुरुषेण सद्वैद्येन वा मात्रोत्तमा रक्तिकातुर्य्यांशोऽर्द्धांशो वा । दर्पघ्नं वांतावुष्णोदकं शमनविषये क्षीराज्यम्, बदल नूरा ॥

जरनव । ब्राह्मी ।

रूक्षोष्णा त्रिगुणं श्रेयस्तुर्यांगबलवर्द्धिनी ॥
शिरोऽर्तिहारिणी वाग्मिमानसाऽनिलकर्षिणी ॥
ग्राहिण्युन्मादशमनी प्रलापध्वंसकारिणी ॥ ५५४ ॥
वाचा वचा क्षौद्रयुताऽवलेहाद्देहान्मनोऽभ्यंतरतो विकारान् ॥
निरस्य सद्यो विदधाति संज्ञां प्रज्ञाप्रबोधं तमसोऽपशोषम् ५५५॥

टीका—शक्तिर्मुलत्तिफ । प्रशस्ता नवा सुरमिश्च ॥

बाहद् १ दिरम् मात्रा स्याद्दर्पघ्नं चन्दनं सितम् ॥
द्रवं गुलाबभूतं च दारचीनी बदल मतः ॥ ५५६ ॥
जकूमवज्री वमथुं विरेकं करोति तृष्णां ज्वरसंज्वरं च ॥
दर्पघ्नमस्याऽऽजपयः प्रयुक्तं क्षीराऽवदाने बदलु—ष्णरश्मिः॥५५७॥

जवद्—मस्का । नवनीतम् ।

स्निग्धं त्रिधोष्णमुदितं द्विधांत्रक्षतपूरकम् ॥
शिरःशिराद्रविणदं कर्णशोथविलायनम् ॥ ५५८ ॥
मांससंरोहणं कासहृदयक्षतपूरकम् ॥
यक्ष्ममातंगपंचास्यसदृशं वर्ण्यमुत्तमम् ॥ ५५९ ॥
मर्दनात्पुष्टिदं देहे त्वक्प्रसादकरं परम् ॥
कांतिदं कामदं कामं दाहोष्मशमनं सरम् ॥ ५६० ॥

जाफरा । कुंकुमम् । केसर ।

शस्तं कुसुंभकुसुमाऽरुणतीव्रगंधं रूक्षोष्णमेकगुणितं बलवर्द्धनं च ॥
वाताऽऽमयोपशमनं नयनाभिरामं पुष्पेषुदीपनकरं प्रसवे ससौख्यम्५६१॥
मूत्रकृच्छ्रहरं बीजकरं चेतःप्रसादनम् ॥

हासोपचयकृद्वेतःस्तंभनं यकृते हितम् ॥ ५६२ ॥

-टीका-शक्तिः मुहल्लिले मुनव्विम । खूब ताजे सुर्खरंग तुंदवोय ॥

प्रशस्तं नवीनं तथोद्दामगंधं
सशोणत्वमुक्तं च काश्मीरजातम् ॥
बदल् कुस्तशीरीं सलीखा च शक्ति-
र्मुफत्तिहू मुफर्रहू मुकव्वी त्रिधाऽपि ॥ ५६३ ॥

अनेसूं जवांरिश् बिही दर्पनाशप्रवीणे प्रवीणैः प्रथां प्रापिते स्तः५६४

जिफ्त रूमी। दवाये कि अजदरख्त सनोवर हासिल गर्दद ।

द्विधोष्णरूक्षं श्लक्ष्णं च दीप्तं पक्षवधं जयेत् ॥
शस्तं कंपं संधिवातं भेदं शैथिल्यमेव च ॥ ५६५ ॥
ऊरुस्तंभं वातरक्तं लेपात्पुष्टिदृढत्वकृत ॥
दोषदं फुफ्फुसस्येदं मात्रा दिरम २ युग्मकम् ॥ ५६६ ॥

टीका-वरहरउज्वे कि तिलाकुनदआंरा फर्बेह कवीगर्दानद ॥

शक्तिर्मुहल्लिल् मुलहम् मुजल्ली सुधाकरो दर्पहरः कतीरा ॥
बदल् परः ख्यातिमितो भिषग्भिर्विनिश्चितेऽर्थे खलु जावशीर॥५६७॥

जिफ्त याबिस ।

पूर्वमार्द्रं ततः शुष्कं द्विधा रूक्षोष्णमीरितम् ॥
याप्यक्षतस्य संधानं विधत्ते मांसरोहणम् ॥ ५६८ ॥
शोथपारुष्यशमनं पूर्ववत्सकलं विदुः ॥ ५६९ ॥

जिफ्त रतव ।

टीका-अर्जीमर्रहसाजंद शेषं पूर्ववत् ॥

जमुर्रद । गारुत्मको मणिः । पन्ना ।

रूक्षोऽनुष्णो निसर्गेण धृत्याऽपस्मृतिनाशनः ॥
दर्शनाद्दृष्टिदोषघ्नो दौर्भाग्यध्वंसनः परम् ॥ ५७० ॥

जंजवील । नागरम् । सोंठ ।

त्रिधोष्णरूक्षं कुसुमेषुदीपनं वातामयघ्नं च शिरोऽर्तिनाशनम् ॥
कासज्वरश्वासबलासहिक्काशोथोदरप्लीहनिबर्हणं स्यात् ॥५७१॥

टीका-तकवियत् जिगर् मादे कुनद इरकुलिसा खदर फालिन तमद्दुद तशन्नुज, बलगमी रा दफेगर्दानद शकीकय याने दर्द नीमसर रा नफरसानद मात्रा दिरम् ।

उष्णांभसा पीतममुष्यचूर्णं तूर्णं सशूलामविनाशनं स्यात् ॥
मेधासमृद्धिं वितनोति नित्यं शिरोगलस्थं हरते च शैत्यम् ॥ ५७२ ॥
मुफत्तिह मुगश्शी च मुहल्लिल मुबही तथा ॥
मुकव्वी शीर्ण उद्दामाः शक्तयः पंच५विश्रुताः ॥ ५७३ ॥
कुरस्काफूरमधुनी दर्पघ्ने समुदाहृते ॥ ५७४ ॥

जंबक–सोसनसुफेद् ।

अनुष्णैकगुणा प्रोक्ता समा स्निग्धत्वरौक्ष्ययोः ॥
तैलमस्या मर्दनेन वृक्कयोर्वेदनाऽपहम् ॥ ५७५ ॥

टीका–सिल दबोल वजे जुहर दर्दपुश्त–पृष्ठपीडा तन्निवारणं च ॥

जंगार–मादनी । तुत्थकम् । तूतिया ।

ताम्राकरभवं शस्तमशस्तं कृत्रिमं च यत ॥
चतुस्त्रिगुणितं रूक्षमुष्णं लेपाच्च कुष्ठजित् ॥ ५७६ ॥
नावनं पीनसघ्नं स्यादंजनादक्षिरोगनुत् ॥ ५७७ ॥
जख कुंड सबल् जुफ्रे वयाज सितताऽक्षिजा ॥
कृष्णभागे तु सोत्सेधा तन्नाशनविचक्षणम् ॥ ५७८ ॥

टीका–हिद्दत् बासरे रा वर अफरोजद्–दृष्टितीव्रत्ववर्द्धनमित्यर्थः ।

क्षौद्रेण चांजितं छिन्नं चक्षुःपक्ष्मप्ररोहणम् ॥
अकण्ठ्यं दर्पहार्य्यस्य क्षीरं हैयंगवीनकम् ॥ ५७९ ॥

टीका–मांसरसश्च । गुलाब लुआव–मेवा । मात्रा यथायोग्यम् ॥

जूफा–याविस ।

जूफाऽभिधानमगदं महिंदीनिभं स्या-
त्पत्रैरशीतलमथो द्विगुणं च रूक्षम् ॥
मिश्री प्रशस्तमतुलं कफलेखनं च
कोष्ठक्रिमिघ्नमुदितं विधिनाऽमुना हि ॥ ५८० ॥

तद्यथा–

सुदाब अंजीर–युतं शृतं तु सक्षीरमुष्णं शिशिरे पिबेद्धि ॥
व्यपोहति क्षिप्रमुदगवेगं श्वासं च कासं चिरकालभूतम् ॥ ५८१ ॥

सिंहास्यसंस्पर्द्ध्यनुभावजुष्टं पार्श्वाऽर्विसंध्यस्थिसमीरणघ्नम् ॥
शूलघ्नगुल्मघ्नमपि प्रदिष्टं स्वरप्रभेदं परिमार्ष्टि सद्यः ॥ ५८२ ॥
मुखवैवर्ण्यवैरस्यनाशनः क्रिययाऽनया ॥
शिकंजवीं–युतः क्काथो रसदोषविशोधनः ॥ ५८३ ॥
टीका–मुसहिल् कैलूस गलीज बुवद् ॥
सिर्का–पक्वस्तु गण्डूषाद्रदनाऽर्तिं नियच्छति ॥ ५८४ ॥
टीका–वदल्–फूलजन दिरम् मात्रा चतस्रः ४ सुभिषङ्मते ॥
यकृतो दोषकरणं उन्नाब किल दर्पहृत् ॥ ५८५ ॥
टीका–मुलत्तिफ मुनइज मुर्दिं कातप किरम् ॥

जूफा–रतब ।

स्निग्धश्चैकगुणस्त्रिधोष्ण उदितो लेपेन शोथाऽपहः ॥ ५८६ ॥
अंजीर टंकण–समेतमपि प्रलेपात्प्लीहोपसर्गमपहंत्यनिलं यथाऽहिः ५८७
अक्लीलुलमल्क जूफा च मस्के मादू गाव एव च ॥
कामिनी यामिनीकाले निदध्यान्मदनालये ॥ ५८८ ॥
बद्धाऽर्तवाऽतिसरणं गर्भप्रसवकारणम् ॥
जलकुक्कुटपित्तेन प्रलेपात्तनुतेऽक्षतम् ॥ ५८९ ॥
सक्षतं मेहनं पायुं श्रवणं गर्भमंदिरम् ॥ ५९० ॥
टीका–रेशकजीव रेशमिकअद रेशरिहम् रेशगोश ॥
एवं क्रमादंगचतुष्टयस्य क्षतानि विद्यान्निपुणः सुवैद्यः ॥ ५९१ ॥
अतियुक्तं शिरःपीडाप्रदं ग्रीष्माऽऽतपो यथा ॥
रोगन्गुल् मुस्लिह ख्यातं वरः सिर्का तथैव च ॥ ५९२ ॥
बदल् मज्जाऽजजंघायाः प्रतीचीभिषजां मते ॥
शक्तिस्त्रिधा निगदिता मुहल्लिल मुलत्तिफ ॥
मुलय्यन पुनर्दक्षा विपक्षदलनक्रमे ॥ ५९३ ॥

जंजबील–शामी । रास्ता–रासन ।

त्रिधोष्णरूक्षा तीक्ष्णा च हारित्सद्योभवा तथा ॥
बदल् ईरसावज प्रोक्तो मात्रा मिस्काल–मानवः ॥५९४॥

हुमामा मस्तगी सिर्का अंगूरी खस एव च ॥
दर्पनाशविधायीनि लब्धवर्णैः कृतानि हि ॥ ५९५ ॥
शक्तिः मुकत्तय् सेहग्लीज़् मुकर्रह मुलत्तिफ ॥

जंजबील-रतब । शृंगवेरम् ।

द्विधा रूक्षं त्रिधा चोष्णं कफकासाऽऽमशूलनुत् ॥
प्रतिश्याये तु सगुडं ज्वरे सरसमीरितम् ॥ ५९६ ॥

टीका-रसो ज्वरांकुशादिः ॥

रसोऽमुष्य यवक्षारयुतः पीतो गलग्रहम् ॥
यमपाशमिव क्षिप्रं छिनत्ति श्रीहरेः स्मृतिः ॥ ५९७ ॥
क्षौद्रेण युक्तः परिसेवितोऽयं त्रिदोषकोपं वृषणाऽनिलं च ॥
द्रुतं निहंति श्वसनं विकारं शैत्यं यथैव श्वसनं भुजंगः ॥५९८॥
शक्तिर्दर्पघ्नमेतस्य विश्वौषधसमं विदुः ॥
परस्परं प्रतिनिधिर्विज्ञेयो वैद्यसत्तमैः ॥ ५९९ ॥

जंजफर जंजरफ । दरदः । शिंगरफ् ।

रूक्षोष्णो द्विगुणं शुद्धो भस्मीभूतोऽथवा पुनः ॥
हंति वातकफाऽऽतंकान्कामधामसमृद्धिदः ॥ ६०० ॥
मुश्लिही मुनइज़् मुस्किन् मुहल्लिल् शक्तयः स्मृताः ॥
बदल् मुर्दारसंग-स्याद्दर्पघ्ने क्षीरसर्पिषी ॥ ६०१ ॥

जयतून ।

शस्ता हारिन्नवा शीता रूक्षा चैकगुणं स्मृता ॥
पित्तहृद् ग्राहिणी पक्वाशयक्लेदविशोषिणी ॥ ६०२ ॥
पक्वा स्वादुः समाख्याता निसर्गेषु चतुर्ष्वपि ॥
लेखनी चाऽपि निर्दिष्टा पक्वाशयबलावहा ॥ ६०३ ॥

टीका-मुजअफ़ मादेबुवद । दर्पघ्नी मस्तगी ॥

इत्येकादशवर्गः ११.

# अथ वर्गो द्वादशः १२.

## रदीफ सीन ।

### साजज-सादज । तेजपात । पत्रजम् ।

त्रिगुणं रूक्षमुष्णं स्यादास्यसौरभ्यवर्द्धनम् ॥
पक्वाशययकृन्मूर्द्धबलप्रदमुदीरितम् ॥ ६०४ ॥
पौष्टिकं क्षीररजसोः सेवनेन प्रवर्तकम् ॥
पूतिगंधं च कक्षाया हृद्रोगं जयति ध्रुवम् ॥ ६०५ ॥
दोषकृत्फुफ्फुसस्येदं दर्पघ्नी मस्तगी स्मृता ॥
मात्रा दिरम्-१ मिता श्रेष्ठाऽथवा मिस्काल-१ मानतः६०६॥

### सर्पिस्तान-सगपिस्तान-सिपिस्तां । श्लेष्मातकः । लहसोड़ा-लभेरा ।

स्निग्धं शीतं द्विगुणितं कासं मान्द्याऽनिलोद्भवम् ॥
कंठशोषमुरःशोषं पित्तरक्तभवां तृषम् ॥ ६०७ ॥
पित्तरक्तप्रकोपोत्थं सदाहं च ज्वरं जयेत् ॥
मूत्रकृच्छ्रं प्रमेहं च रामेषुरिव रावणम् ॥ ६०८ ॥
प्रशस्तं पीवर फलं मात्रा सी ३० अदद स्मृता ॥
पक्वं शोणं च सुस्वादु कामवीर्यविवर्द्धनम् ॥ ६०९ ॥

टीका-संख्यया त्रिश ३० दित्यर्थः । यकृते हितम्, उन्नाव दर्पघ्नम् ॥

### सिदर-कुनार । बदरीफलम् ।

पालाशवर्णं सुपलाशवृक्षं बृहत्फलं स्वादुरसं गारिष्ठम् ॥
शीतं त्रिधा स्निग्धमरूक्ष्महंतृ तृषाऽपहं तापहरं च रुच्यम्॥६१०॥
जलस्य वारिसंलिप्तं शिरोवीसर्पनाशनम् ॥
शक्ति-र्मुरत्तिब प्रोक्ता शीर्षदोषप्रदं भवेत ॥ ६११ ॥

### सुदाव-सालोन । खूब बोस्तानी, तेजबोयं ।

तद्यथा—

उद्यानसंभवं तीक्ष्णगंधोद्दामं महोत्तमम् ॥
प्रलेपात्सिध्मकुष्ठोरुस्तंभग्रंथ्यपचीर्जयेत ॥ ६१२ ॥

संधिभेदं समीरोत्थं श्लेष्माऽऽमोत्थं कटिग्रहम् ॥
पार्श्ववक्षोरुजं चाऽपि श्वासं कासं व्यपोहति ॥ ६१३ ॥
राजथानज–नीरेण क्षौद्रयुक्तेन चांजितम् ॥
दृङ्मांद्यं संहरेद्गाढं प्रदीप इव तामसम् ॥ ६१४ ॥

टीका–मात्रा दिरम् १ । शक्तिः–मुकत्तय मुलत्तिफ मुदिर्र मुगश्शी। दर्पघ्नी अनेसूं। बदल पोदीना ॥

सादकफी–मुश्किकजेरजमीन । मुस्तकम् । नागरमोथा ।

एकधोष्णो द्विधा रूक्षः सभ्यशास्त्रे तु शीतलः ॥
हंति तृष्णामतीसारं वर्ण्यश्चाऽऽस्यसुगंधिदः ॥ ६१५ ॥
ज्वरनिर्वापणो मूत्रकृच्छ्राघाताऽश्मरीहरः ॥
शस्तः कासारसंभूतो मेध्यः फुप्फुसदोषलः ॥ ६१६ ॥

टीका–शक्तिः मुजफ्फिफ मुदिर्र मुगश्शी मुकव्वी दमाग दिल ॥

मात्रा दिरम् १ मिता दर्पहरं चंदनमर्ज्जुनम् ॥
अनेसूं खस एर्वारुबीजमुक्तं भिषग्वरैः ॥ ६१७ ॥
षड्ग्रंथा दारचीनी च वैद्यैर्बदल ईरितः ॥ ६१८ ॥

सफर्जल–आबी–बिही । मधुकम् ।

स्निग्धं शीतं द्विगुणितं पक्वाशयबलावहम् ॥
पक्वं पीनं प्रशस्तं स्यात्स्वादु सूनेषुदीपनम् ॥ ६१९ ॥
उदन्यां वमथुं मोहं निहन्यान्मूत्रशुक्रलम् ॥
संतारिश्राय कविदी यकृतोऽस्त्रविरेचनम् ॥ ६२० ॥
बध्नाति दवथुं चाऽपि शर्बत एतस्य वा पुनः ॥
मुस्लिह क्षौद्रमाख्यातं बदल उन्नास ईरितः ॥ ६२१ ॥
अशनाद्यंतयोर्ग्राहि रेचकं क्रमशोऽशिवम् ॥
सक्षतं त्वक्षतं कुर्यात्पक्वगर्भाशयं द्रुतम् ॥ ६२२ ॥

टीका–शक्तिः मुकद्दम काबिज हाबिस दम मुकव्वी कल्वः ॥

सकमूनिया, महमूदा–निर्यासविशेषः ।

टीका–वरग दरख्त मानिंद लबलाव याने इष्कपेचां बुवद खूब साफ मुतखल खल बाशद चूं बिमालंद आरद गर्दद दर आब जल्द हल शवद मिसाल शीर ॥

अस्यार्थः-

इष्कपेचां-निभं पत्रं तत्तरोः परिलक्षितम् ॥
सुप्रशस्तं लघु स्निग्धं ससौषिर्य्यं विमर्दितम् ॥ ६२३ ॥
सितं पिष्टसमं यत्स्यादम्भःसुपयसा समम् ॥ ६२४ ॥

टीका-ईरा बदींतरीक मशवी साजंद विधिनाऽनेन पच्यत इति ॥

तद्यथा-

बिही-मध्येऽथवा सेव-मध्ये संस्थाप्य वाससा ॥
दृढं संवेष्ट्य गोधूमपिष्टगोले विपाचयेत् ॥ ६२५ ॥
पुटपाकेन संशुद्धं वैद्यः सर्वत्र योजयेत् ॥
बनफ्शा-सहितं केचिदशुद्धमपि शुद्धवत्[1] ॥ ६२६ ॥
रूक्षोष्णं त्रिगुणं तीव्ररेचनं पित्तसारकम् ॥
सरेशम्-सदृशं केचित्पुटपाकांतरं विदुः ॥ ६२७ ॥
प्याज-जर्दक-मध्यस्थं विपचेत्पुटपाकगम् ॥
बृंहणः पूर्वं उद्दिष्टो लेखनस्त्वपरो मतः ॥ ६२८ ॥

टीका-या दर गुलाब शवॉ रोजे दाइंद । गुलाब-स्वाऽहर्निश भावनीय वा ।

रोगन्बादामशीरीं च अनेमूं मस्तगीति च ॥
कतीरा-जातिपत्री च दर्पघ्नानि वदंति हि ॥ ६२९ ॥

टीका-शक्तिः मुसाहिल्ल सफरा सौदा जिगर दिल दिमाग राजईफ गर्दानद-अन्त्र-यकृद्‌हृदयोत्तमागानां प्रक्षेण्यकृत् । कय गशियान अंदोह तिश्नगी आरद वांत्युत्क्लेदवैकल्यो-दन्याप्रदमित्यर्थः ॥

अवियुक्तं त्वतीसारकरं तद्दोषशांतये ॥
सक्तु तक्रं बिही सेव शर्बत् रीवास वा क्षमम् ॥ ६३० ॥

टीका-इसहाल कुनद शर्बीक दोग सक्तुतक्रम् ॥

वीर्यं विकारोऽस्य शरीरवर्त्ती क्षिप्रं विदध्यादुपचारमग्र्यम् ॥
दुर्नाममंदाऽग्निरुचिप्रभेदं रक्ताऽतिसारं तनुतेऽपघातम् ॥ ६३१ ॥

टीका-रुचिप्रभेदो वैवर्ण्यमरोचक च । सकनकूर वरल रेगमाही दर मिसर दरया रोदनील पैदा मे शवद । अज नसलत मसाह याने निहंगऽस्त ॥

---

[1] वदन्तीत्यर्थः ।

मिसर्-देशे रोदनील् नाव्ह्-नामनद्यां समुद्भवेत् ॥
प्रभेदो मकरस्याऽयं सूतेऽण्डं तीरपालिषु ॥ ६३२ ॥
तदन्तःस्थो विशेदम्भः स नक्रो यः प्रसर्पति ॥
परितो वालुकाभूमौ सकनकूर स संस्मृतः ॥ ६३३ ॥
सकनकूर वरल्माही द्वयोर्भेद इतीव हि ॥
तीरस्थायी सकनकूर वरल्मीही वनेचरः ॥ ६३४ ॥
वरल्-विशालशीर्षा स्यात्पीताऽरुणतनुप्रभः ॥
जरठ श्मश्रुधरश्चाऽथ किर्म्मीरश्चाऽपराऽभिधः ॥ ६३५ ॥

टीका-अवलक, रंग सब्जी, जर्दी, स्याही, सुफेद, मायल, बाशद, श्लक्ष्णाकृतिश्च ।

अनेन संदष्टतनुर्मृगयुः प्रथमं जलम् ॥
निर्विशेद्यदि जीवेत सकनकूर मृतिं व्रजेत ॥ ६३६ ॥
दंशं विधाय सपदि नीरं यदि विशेत्स्वयम् ॥
तदा जीवेत्सकनकूर मृगयुर्लयमाविशेत ॥ ६३७ ॥
स चार्द्रस्त्रिगुणं स्निग्धस्तथोष्णो गुरुरेव च ॥
संशुद्धो लवणाक्तश्च घर्मे संशोषितश्च यः ॥ ६३८ ॥
त्रिगुणं लघुरूक्षोष्णो मनइज् मुबही तथा ॥
मात्रा दिरम १ मिस्काले १ मसूरो दर्पहा स्मृतः ॥ ६३९ ॥
बदल् खुसियतुः सालिब् कजीब् नरगाव एव वा ॥ ६४० ॥
वृन्दारकायते कामी स्थविरोऽपि निषेवणात् ॥
प्रसूनेषुसमाभः स्याद्ब्रह्मात्मजकरश्च सः ॥ ६४१ ॥

सुकर-शरक । शर्करा ।

सिताऽच्छा सुप्रकाशा च हिन्दुस्तान-समुद्भवा ॥
शरवा स्निग्धोष्णतायुक्ता बदर्जे अव्वल स्मृता ॥ ६४२ ॥
स्रोतःसंशोधिनी मूत्राघातविध्वंसिनी परा ॥
पित्तप्रमाथिनी वातभुजंगा शुक्रला सरा ॥ ६४३ ॥
पक्काशययकृच्छीषहृदां बलविवर्द्धिनी ॥

गव्याऽऽविकेन संयुक्ता सर्पिषा प्रातराशिता ॥
मूत्राघातं जयेत्कोष्णा वस्तिनाभ्यर्तिनाशिनी ॥ ६४४ ॥
वनितायाः प्रसूताया रजः शेषं नियच्छति ॥
जठरांतःस्थितं सद्यो गर्भाशयमलाऽभिधम् ॥ ६४५ ॥

टीका—दर्पघ्नम्—अनार तुर्श सायर हामिजात याने तमामतुर्शी—समस्तमम्लजातमित्यर्थः । बदल आलू—तथा द्राक्षा । मात्रा दिरम २० विंशतिः ॥

क्षौद्रं चाऽपि तथा शक्तिर्मुलय्यन् मुबही पुनः ॥
मुजल्ली च त्रिधा सद्यश्चमत्कारकरी भजेत् ॥ ६४६ ॥

सकवीनज ।

प्रशस्तं तीव्रगंधं यदंतःशोणं बहिः सितम् ॥
रूक्षोष्णं त्रिगुणं शूलं पक्षाघातं नियच्छति ॥ ६४७ ॥
ऊरुस्तंभं रक्तपित्तं क्रिमिकुष्ठमथोदरम् ॥
संधिभेदमुदावर्तं दुष्टदोषान्व्यपोहति ॥ ६४८ ॥

टीका—अखलात फासिद रा पाकसाजद ॥

मूत्राऽऽर्त्तवमृतभ्रूणशोधनं कामदीपनम् ॥
कटिपृष्ठसमीरोत्थां वेदनां हंति दुर्जयाम् ॥ ६४९ ॥

टीका—दर्पघ्नम—उश्शक ॥

वस्तेर्दोषकरं प्राज्यं मात्रा चंद्र १—मिता दिरम् ॥ ६५० ॥

सलक, चुकंदर, किस्म शलाम् ।

स्निग्धोष्णं द्विगुणं लेपादिंद्रलुप्तनिबर्हणम् ॥
यूकालिक्षासिध्मदद्रुकुष्ठवाताऽस्रनाशनम् ॥ ६५१ ॥
स्वरसः सारनालोऽस्य पीतः शूलं च कंपनम् ॥
श्लेष्माणं सांद्रसंश्लिष्टं छिनत्त्यगमिवाऽशनिः ॥ ६५२ ॥
शिफास्वरसनस्येनाऽपस्मृतिश्च स्मृतिर्भवेत् ॥
मान् रसो दह् १० दिरम् कोष्णः किंचिद् गारयकूं—युतः ६५३
पीतः समस्तदोषाणां प्लुष्टानां रेचको भवेत् ॥
खूब शीरी मुजल्ली च मुलत्तिफ मुहल्लिल ॥ ६५४ ॥

सिर्का दर्पहरः प्रायो बदल् शलाम् प्रकीर्तितः ॥ ६५५ ॥

सलीखा, कहला, कहेली ।

विशालं लोहितं शस्तं रूक्षोष्णं त्रिगुणं लघु ॥
पाचनं शोधनं सूक्ष्मं दुष्टवाताऽनुलोमनम् ॥ ६५६ ॥
रजःप्रवर्तकं मूत्ररेचनं वीर्यवर्द्धनम् ॥
भ्रूणगर्भाशयक्लेदजरायूणां च कर्षणम् ॥ ६५७ ॥
वक्षःपार्श्वाऽस्थिजठरपृष्ठवंशसमीरजाम् ॥
रुजं जयेदामभवां मात्राऽस्य दिरम-द्वयम् ॥ ६५८ ॥
शक्केश्चैविध्यमादिष्टं मुंजिजू मुस्किन् मुदिरं च ॥
कतीराऽऽयुर्विदां श्रेष्ठैर्दर्पभंगोपलक्षितः ॥ ६५९ ॥

सलखुलहप्पह, पोस्त, फकंदह, मार । कुंडलिनः-कुंचुकः ।

असितेतरवर्णो यः प्रशस्तो रूक्षशीतलः ॥
द्विगुणं निर्विषो वाह्यक्रिमिसंहारकारकः ॥ ६६० ॥
प्रसन्नायां शृतेनाऽस्य गंडूषो दशनाऽर्त्तिजित् ॥
कर्णपूरः श्रवणजां वेदनां हंति सत्वरम् ॥ ६६१ ॥
दृक्प्रसादं वितनुते सारघेणांजितो दृशि ॥
प्रलिप्तः केशजनकः सिर्का-युक्तेन भस्मना ॥ ६६२ ॥

सिमाक । वृक्षाऽम्लः-तिंतिडीकः ।

हिममेकगुणं रूक्षं त्रिगुणं वह्निदीपनम् ॥
पाचनं ग्राहि पित्तघ्नं वातघ्नं क्लेदशोषणम् ॥ ६६३ ॥
दुर्राज-तित्तिरिकुलिंगपलेन पक्वं
हन्याच्चिरंतनभवं ग्रहणीविकारम् ॥
नेत्रांजितं सबल खारिश दाहपीडां सद्यो
निर्हंति च गुलाब-युतं प्रलेपात् ॥ ६६४ ॥
स्वरसो वमथुं तृष्णां मुखपाकमरोचकम् ॥
रक्ताऽतिसरणं हंति व्यामोहं च मदात्ययम् ॥ ६६५ ॥

टीका-दर्पघ्नी मस्तगी प्रशस्त ताजे सुर्ख । बदल-हुमाज जरष्क परश्याविशां ॥

सिम २ हल्लकुंजद् । तिलाः ।

स्निग्धोष्णो द्विगुणं वृष्यो बृंहणः पुष्टिवर्द्धनः ॥
वर्ण्यों मार्दवकृद्रेतोवृद्धिदस्त्वक्प्रसादनः ॥
रजः प्रवर्त्तकः केश्यः पिडिकाव्यंगनाशनः ॥ ६६६ ॥
मुलय्यन् मुबही शक्तिर्मुहल्लिल् मुनइज् पुनः ॥
उत्तमा प्रसृतिर्मात्रा बदल् भर्ज्जनमर्दनम् ॥

समकू, माही-शफरी ।

पाठीनः श्लेष्मलः शीतः स्निग्धः सद्यः समाहृतः ॥
पटुनाक्तो लघू रूक्षो द्विगुणं शिशिरेतरः ॥ ६६७ ॥
तद्भस्म सारमेयस्य दंशस्थविषनाशनम् ॥
दाहं कुष्ठं रक्तपित्तमतियुक्तं करोत्यसौ ॥ ६६८ ॥
मुनइज् मुबही शक्तिः पुष्पचापेषुदीपनः ॥
रोगन्बादाम शीरीं च फिल्फिलेन तथैव च ॥ ६६९ ॥
जंजवील मुरब्बा च शराब वरदर्पहृत् ॥
बदल् लहम मात्रा च यथाऽग्निबलमीरिता ॥ ६७० ॥

सनाय, मकई ।

पालाशपत्री फलिनी प्रशस्ता कुंजश्क जिह्वासदृशी च सूक्ष्मा ॥
पीता च किंचित्कफपित्त-सौदा वाताऽमसंशोधनरेककर्त्री ॥६७१॥

टीका-कुंजश्क-कलविंकः ॥

रूक्षोष्णा त्रिगुणं शक्तिर्मुदिर्र मुसहिल् तथा ॥
शृतांभसि निपीतेयं संधिभेदं नियच्छति ॥ ६७२ ॥
ऊरुस्तंभं च मात्राऽस्या दिरम् ७ सप्त प्रकीर्त्तिता ॥
एक १ द्वि २ त्रि ३ दिरम् शर्बत् क्षोदे वैद्यैरुदीरिता॥६७३॥
बदल् तुर्बुद दर्पघ्नं बिहीदानाऽस्यगो लघु ॥ ६७४ ॥

सुंबलअत्तीव । जटामांसी । बालछर ।

रूक्षोष्णा द्विगुणं शक्तिर्मुहल्लिल् मुदिरर् तथा ॥
मुकव्वी दिल् दमाग स्याद् गुच्छवद्बंधिनी वरा ॥ ६७५ ॥

जिगर् पक्वाशयातंकं वमथुं ग्लानिमेव च ॥
मूत्ररोधमतीसारं हन्याच्छ्वासमथोदरम् ॥ ६७६ ॥
प्लीहाऽर्त्तिमुखवैरस्यदौर्गंध्यध्वंसिदीपिनी ॥
मुंजिरर् वृक्कयोर्मुस्लिह् कतीराऽस्याः समीरितः ॥ ६७७ ॥

टीका-बदल अजखर सादज । मात्रा दिरम् २ ॥

सिंदरूस समगेऽस्त-मानदं कहरुवा-निर्यासविशेषः ।
रूक्षोष्णो द्विगुणं सद्यो मायुल् असल-योगतः ॥
सारयेदार्त्तवं मूत्रं हाविस् दम् लापितः स्मृतः ॥ ६७८ ॥
शिकंजवीं-युतं मात्रा दिरम् १ एका समाऽशिता ॥
बलप्रदोत्तमांगस्य प्रतिश्यायं क्षयं नयेत् ॥ ६७९ ॥

टीका-खूब साफ शक्तिः मुजफ्फिफ । मात्रा नीमं दिरम् या नीम मिस्काल । दर्पहरी बूजीदां कहरुवा छुक् ॥

सूरंजा-वन्यः शृंगाटविशेषः ।
मिसर-नीवृत्समुत्पन्नः प्रशस्तोंतश्च बाह्यतः ॥
विशदः परुषो रूक्षो द्विगुणं शिशिरेतरः ॥
कुष्ठसंध्यर्त्ति-खदर पक्षाघातं द्रुतं जयेत् ॥ ६८० ॥
गव्याविकेनाथ च सारघेण घृतेन वाऽर्शोऽर्तिविनाशहेतुः ॥
लिप्ते गुदे जालपदस्य मेदसा पित्तेन वा ताम्रशिखस्य सद्यः ६८१

टीका-नीम् दिरम् व रागनगोसपंद या वरोगन्माद गाव या व रोगन्मादे शुतर या व पीहेवत्त ह या वपीहे मुर्ग खानगी आमेरव्रूह वा पंजेकोहनेवरदारंद व खवासीर नफे तमाम रसानद ॥

अकलीलुलमल्क बाबूना द्वयोः क्वाथेन सेवितः ॥
चूर्णितः प्राशनाद्धंति स्थित्यां संधिविनिग्रहम् ॥ ६८२ ॥
पक्वाशयाऽहितात्यंतं दर्पघ्नं कुंकुमं कणा ॥
नागरं शर्करा वाऽपि भिषग्वर्यैः प्रकल्पितम् ॥ ६८३ ॥

टीका-कतीरा च । बदल तुर्बुद तुर्य्यांशेन । अकहवान तुर्यांशोऽर्द्धांशो वा । खर्वक सुफेद दरमालजे वजेमुफासिल या बूजीदां मात्रा मिस्काल १ ॥

इति द्वादशो वर्गः १२.

---

# अथ वर्गस्त्रयोदशः १३.

## रदीफ शीन् ।

### शाहतरज, शाहतरा । कल्याणा । पित्तपापडा ।

द्विगुणं शिशिरो रूक्षः शस्तः सस्वरसो हरित् ॥
पित्तज्वरं तृषं दाहं हंति पित्ताऽस्त्ररेचकः ॥ ६८४ ॥
दग्धदोषाऽपहरणः क्वाथः कंडूरुजाऽपहः ॥
मूत्रकृच्छ्रं हरेत्पीतो गंडूषाद्दशनार्त्तिजित् ॥ ६८५ ॥

टीका–मात्रा कषाये दिरम् ४ समारभ्य दिरम्–१० पर्यंतम् चूर्णे दिरम् १ प्रभृति दिरम् ७ पर्यंतम् ॥

विपक्षो निंबुकं क्षौद्रं बदल् पथ्या सनाय च ॥
विरेकविषये ग्राह्या नीम माना न चाऽपरे ॥

टीका–कुव्वत मुनक्की अखलात फासिद मुलत्तिफ–दुष्टदोषसंशोधिनीत्यर्थः । अंदके मुसहिल्–ईषद्रेचनीत्यर्थः ॥

### शाहबलूत ।

समं तुर्यनिसर्गेषु पक्वमम्लवरं स्मृतम् ॥
शक्तिः काबिज मूत्रस्य दाहदोषनिवारणम् ॥ ६८६ ॥
बदल् खर्नूब निर्दिष्टो दर्पघ्ने क्षौद्रशर्करे ॥ ६८७ ॥

### शादनज–शादनह । हजतुल्दम्, हारयाविस बदर्जे दुयम् २ ।

क्षालितं ताम्रचूडांडद्रवश्वैत्येन चांजितम् ॥
क्षतमक्ष्णोः पक्ष्मरोगं शोथं दवथुमक्षिजम् ॥ ६८८ ॥

टीका–हिनस्तीति शेषः ॥

अनार–रससंपीतं नफ्सुल्दम् रोधकारकम् ॥
मर्दयेद्दासुसा नद्धमंभसा क्षालने विधौ ॥ ६८९ ॥
जलागतं समादेयं न्यूमदेग्रे वाससि स्थितम् ॥
नवनीतनिभं शुद्धं सिद्धं कार्य्यक्षमं भवेत् ॥ ६९० ॥

टीका–शक्ति. हाविसुदम्–रुधिरावरणीत्यर्थः ।

शाहदाना । विजया-बीजम् ।

टीका-कश्मीरी अमीरी-उत्तमा तद्भवं बीजाऽधिकारे प्रागुक्तमेव ॥

तथाऽकिंचिद्विशेषेणोच्यते-

रूक्षोष्णं त्रिगुणं मुस्किन् मुनव्विम् मुम्सिक-त्रयम् ॥
शक्तीनां चात्र निर्दिष्टं कुर्यात् तस्वीन-वर्ष्मणः ॥ ६९१ ॥

टीका-कुव्वत्-मुसस्खिन् शरीरोष्मप्रवर्द्धिनी शक्तिरित्यर्थः ॥

शईर-यव । जौ ।

द्विगुणं रूक्षशीतः स्यात्तुषांबु स्निग्धशीतलम् ॥
पित्तरक्तज्वरं तृष्णां दवथुं वमथुं हरेत् ॥ ६९२ ॥
बीजैः शिफाभिः क्वथितः शतपुष्पाऽजमोदयोः ॥
बल्गमी तप्प सौदावी द्वयोर्नाशे पटुर्भवेत् ॥ ६९३ ॥
अक्लीलुल्मल्क खशूखाश क्वाथपिष्टः प्रलेपनात् ॥
कुष्ठं संधिरुजं हन्यात् अनेसूं दर्पहारिणी ॥ ६९४ ॥

शकाकुल-जर्दक् रेगी ।

स्निग्धोष्णं त्रिगुणं पुष्पत्त्रापदीपनशुक्रलम् ॥
त्वच्यं वर्ण्यं बृंहणं च सेव्यं मेहनदार्ढ्यकृत् ॥ ६९५ ॥
मूत्रलं मुस्लिह क्षौद्रं फुप्फुसस्य च दोषलम् ॥
आमलं चाऽपि दर्पघ्नं प्रशस्तं पीतवर्णयुक् ॥ ६९६ ॥
मुफर्रह् मुबही शक्तिर्मुकव्वी कलब त्रिधा ॥
बूजीदां दारचीनी च चिल्गोजा बदल स्मृता ॥ ६९७ ॥

शकावक-गुल्लाला-दुखरी याने कोचकः क्षुद्रपुष्पः ।

रूक्षोष्णमेकगुणितं स्निग्धं द्विगुणितं परे ॥
स्वरसोऽस्यांजितो नेत्रश्वैत्यप्रायनिवारणः ॥
नज्ला-निरोधकारी च प्राशनात्कुष्ठकर्षणः ॥ ६९८ ॥
बीजं शीताम्भसा पीतं चूर्णितं वातरक्तजित् ॥
दर्पघ्नं संजद् ख्यातं दिरम् १ मात्रा प्रकीर्तिता ॥ ६९९ ॥

टीका-शक्तिः जाजव-मुनव्विम बदल शीह ॥

शलाम्-शलजम् ।

वक्षःसंशोधनं सारं स्निग्धोष्णं चैकधा द्विधा ॥
वीर्यवारिधिकारि स्यात्स्मरसन्दीपनं परम् ॥ ७०० ॥
दर्पघ्नी खर्द्दिल प्रोक्ता सेवितं क्षुत्प्रबोधकृत् ॥
प्रभूतं जठराध्मानकार्युक्तं रोगहारिभिः ॥ ७०१ ॥

टीका-दल-चुकन्दर ॥

शमय-सिक्थकम् । मोम ।

समं चतुर्द्धा सुश्वेतं प्रशस्तं मधुगंधयुक् ॥
रोगन्बनफ्शा बादाम मिश्रितेन विलेपनात् ॥ ७०२ ॥
ऊष्माणं हंति पारुष्यं वक्षसो हरिमल्लवत् ॥
जठरे मर्द्दनादेव क्षीराऽजीर्णनिषूदनम् ॥ ७०३ ॥

टीका-शूनत् सरव्ती सखुनत गर्मी हरदुरा अज सीने दफे गर्दानद ॥

शअर-मोय । केशाः ।

पिष्टाः सिर्का-द्रवे सारमेयस्य विषकर्षणाः ॥
उपानत्स्फोटशमना धूपनात्प्रेतनाशनाः ॥ ७०४ ॥

शोनीज । कारवी । कलोंजी ।

त्रिधोष्णरूक्षा श्वसनं बलासं विपाचयेच्चाऽपि विरेचयेच्च ॥
विपाच्य मूत्रे पृथुकस्य लिप्ता शोथं निहन्याज्जठरे समस्तम् ७०५॥
विशालास्वरसेनाथ जठरे सम्प्रलेपनात् ॥
कोष्ठतः पातयेन्मंक्षु क्रिमीन्दीर्घलघूनपि ॥ ७०६ ॥
भृष्टबीजा नीलवस्त्रे नद्धा संभ्रामिताऽलिके ॥
प्रतिश्यायं प्रमेहं च शोषयेदातपाम्बुवत् ॥ ७०७ ॥
शृताम्भसि क्षौद्रयुतातिपीता पक्षक्षयं चार्दितमाशु हंति ॥
सौदा-ज्वरं बल्गम-सम्भवं च गर्भाशयाऽर्ति च तथाऽश्मरीं च७०८
आहेयाऽस्त्रेण संलिप्ता कुष्ठघ्नी गदिता बुधैः ॥
गोमूत्रसंयुताऽऽघ्राता सद्यः संज्ञाप्रकाशदा ॥ ७०९ ॥

१ 'विमर्दनात्' इत्यपि पाठः ।

मात्रा द्वित्रि २।३ दिरम् मुस्लिहद् कतीरा कासनी तथा ॥
समग् जैतून वा तुख्म तरहतेजक् बदल्-मतः ॥
अवीवील-क्षतोत्थेन प्रलेपात्कुष्ठनाशिनी ॥ ७१० ॥

टीका-अवीवील-पक्षिविशेषः पुंजीभूतो गणशः सायंप्रातर्ग्रीष्मे प्रावृषि चांबरे भ्रमति श्यामाभवर्णस्तदसृजेत्यर्थः । शक्तयः ३ मुकत्तय मुजल्ली मुर्दिर ॥

शिस-पीतप्रसूना शतपुष्पा । सोवा ।

रूक्षोष्णं त्रिगुणं शक्तिर्मुफत्तिह मुनव्विमः ॥
स्फुटपुष्पा हरिद्वर्णा नवा शस्ता प्रकीर्तिता ॥ ७११ ॥
प्रसूतातंकशमनी मात्रा स्याद्दिरमद्वयम् २ ॥
योग्या दर्पापहा दारचीनी देवप्रसूनकम् ॥ ७१२ ॥
निंबुकं क्षौद्रमथवा शल्मम् किंच प्रकीर्त्तितः ॥
अर्द्धमानः प्रयोगेषु बाबूना बदल स्मृतः ॥ ७१३ ॥

टीका-खूब ताजे शिगुफगुल् ॥

शीतरज-चित्रकम् । चीता ।

द्विधा रूक्षस्त्रिधा चोष्णः सिर्का-पक्वः प्रलेपतः ॥
श्वित्रकण्डूप्लीहवृद्धिमूरुस्तंभं नियच्छति ॥ ७१४ ॥
सन्धिवातमुदावर्तं श्वासकासकफाऽऽमयान् ॥
धारयेत्कण्ठदेशे हि दर्दे दंदान-नाशनम् ॥ ७१५ ॥
मुजल्ली च मुनव्वी च मुमिही-शक्तयः स्मृताः ॥
खूब हिन्दी च दर्पघ्ने मस्तगी हारिचन्दनम् ॥ ७१६ ॥
सोफे कूवा-हरो लेपात् बदल-ग्रन्थिकं स्मृतम् ॥
आकारकरभो वाथ मात्रा मिस्काल १ मानतः ॥ ७१७ ॥
बजेमुफासिल् इरकुन्निसा च द्वयोः प्रणाशे प्रवणः प्रकीर्तितः ७१८

शीरखिश्त, नमीऽस्तदरमुल्कखुरासान, चूंशबनम्,
बरदख्तस्याहचोब, किदरवतेऽस्तवेवरवरी गायत,
सलव, मुंजमिद, गर्दद, खूब मिसाल, समग ।

समं चतुर्वा सफरा विरेचनं मात्रा दिरम् ७सप्त १०दशाऽपि वा स्युः॥
अर्द्धप्रमाणेन तुरंजवीं वा अंगूर या तुर्श बदल् समीरितः॥७१९॥

शुकाई, वादावर्द ।

शुद्धा शुकाई शुकपत्रवर्णा शस्ता नवीना त्रिविधोष्णरूक्षा ॥
मात्रा दिरम्-युग्म२मिता प्रयुक्ता शक्तिर्मुहल्लिल् गदिताऽत्र वैद्यैः ७२०

टीका-दर्पघ्न क्षौद्रम् ॥

शीह्, दिर्मने तुर्की ।

उष्णौ द्विधा त्रिधा रूक्षौ द्वौ २ मिस्काल विचूर्णितः ॥
धारोष्णपयसा पीतः क्रिमिसम्पातनः क्षणात् ॥ ७२१ ॥
भस्मीकृतः प्रलेपेन रोगन् बादाम मिश्रितः ॥
दाघुः सालिब-रोगघ्नो दायुलहय् निबर्हणः ॥ ७२२ ॥
मुहल्लिल मुकत्तय्च शक्तेर्युगलमुत्तमम् ॥
भिषङ्मते प्रशस्तः स्यात् इम्मुनी प्रथिताऽभिधः ॥ ७२३ ॥
अफ्सन्तीन प्रतिनिधिर्मात्रा नीम दिरम् मिता ॥ ७२४ ॥
दर्पघ्नानि बनफ्शा या शर्बत् रीवास एव वा ॥
शर्बत् तुरंज तिर्मस् वायविडंग बदल्-स्मृतः ॥ ७२५ ॥

इति त्रयोदशवर्गः १३.

## अथ वर्गश्चतुर्दशः १४.

रदीफ-स्वाद ।

साबून, जामेशोब ।

त्रिधा रूक्षः सुतीक्ष्णश्च चतुर्द्धा शिशिरेतरः ॥
शूलार्त्त उदरे लेपाच्छूलमूलनिकंतनः ॥ ७२६ ॥
पटुना युक्तसंमर्दात्स्नाने हम्माम-मध्यगः ॥
कंडूमान्द्वगुणः शर्म्म लभेद्दोषक्षयादिव ॥ ७२७ ॥
हिना समानमानेन संयुक्ताऽनेन लेपिता ॥
जांनु-दर्द-हरी ज्ञेया सि ३ मिस्काल-वधाय सः ॥७२८॥
तद्दोषहरणं वांत्या नीरोष्णतिलतैलतः ॥

शोरवामुर्ग—शमने रोगन्बादाम—संभवः ॥ ७२९ ॥

टीका—बदल नूरा ॥

सिवरसकूत, एलुवा ।

पक्काशयोष्मजनको रूक्षोष्णो द्विगुणं त्रिधा ॥

वातस्य पित्तकफयोः शमनः शोधनः सरः ॥ ७३० ॥

सुदे कुशा जरब् सोजश् चश्म—भूतवदंतकः ॥

दृष्टिप्रसादकृल्लेपात्सर्वनेत्राऽऽमयाऽपहः ॥ ७३१ ॥

गंद्ना—रससंपिष्टः प्रलेपादर्शसोंतकः ॥ ७३२ ॥

अक्षालितः प्रचुररेचनकर्म्मकारी

प्रक्षालितो गुणहरो गुणकारकश्च ॥

मिस्काल एक इति वा दिरमे—कमात्रा

ह्यंत्राऽपकारि बहुदर्पेहरः कतीरा ॥ ७३३ ॥

सदफ—शुक्तिः । सीपी ।

रूक्षाऽनुष्णैकधा प्लुष्टा कासाजीर्णकफाऽपहा ॥

अक्लीलुल्मल्क बाबूना—रसेनाऽऽलेपिता ध्रुवम् ॥ ७३४ ॥

बजेमुफासिल—ध्वंसकरी दुर्जल दोषजित् ॥

कश्नीज् रससंपिष्टा प्रलिप्ता शीतलाऽलिके ॥

रुआफ—स्तम्भनकरी सद्यः प्रोक्ता चिकित्सकैः ॥ ७३५ ॥

सातर, आविशा ।

रूक्षोष्णं त्रिगुणं चाऽस्य कषायप्लीहवृद्धिहा ॥

शर्बत् शिकंजवीं—युक्तः क्रिमिघ्नो वातरोगनुत् ॥ ७३६ ॥

शव्कोरी—नाशनः पक्काशयांत्रदोषकर्षणः ॥

मुदिर् मूत्ररजसोर्मात्रा मिस्काल—मानतः ॥ ७३७ ॥

मुलत्तिफ मुगश्शी च मुफत्तिह इति क्रियाः ॥

खब्ब कोचक पत्रः स्याद्धितकार्योपकारकः ॥ ७३८ ॥

दिरम् १ एकाऽथवा मात्रा नीम मिस्काल—मानतः ॥

---

१ शाकयः ।

सिकोऽदीनवसंहर्ता बदल् फूतुनज्--प्रकीर्तितः ॥ ७३९ ॥

समग अर्बी–निर्यासविशेषः ।

स्वच्छः श्लक्ष्णः सितः पीतः प्रशस्तः सुप्रकाशवान् ॥
निस्तुषश्च समस्तुर्य निसर्गेषु निगद्यते ॥ ७४० ॥
मायुप्रभंजनभवं क्षवथुं स्वरस्य भेदं च कण्ठजरठत्वमपाकरोति ॥
हृद्यामतः कफविशोषणजं समस्तं सौषिर्यमस्नविकृतिं प्रकृतिं नयेच्च ७४१
वैदाह्यमौषधिभवं प्रदरं च कटिग्रहम् ॥
यादृक्तरुसमुत्पन्नस्तादृग्गुणसमन्वितः ॥ ७४२ ॥
समग् बादाम बदल कतीरा दर्पहा स्मृतः ॥
काबिज् हाविस् मुगर्जी च शक्तयस्तिस्र ईरिताः ॥ ७४३ ॥

टीका, मात्रा मिस्काल २॥

संदल–अबियज–हरिचन्दनम् ।

सितं सुरभि शीतं स्यात्त्रिगुणं याबिस द्विधा ॥
ज्वरं पित्तभवं जीर्णं दवथुं वमथुं तृषम् ॥ ७४४ ॥
हृद्रोगं पित्तरक्तोत्थं हृदो बलविवर्द्धनम् ॥
संहरेदचिरान्मेहानसुरान्सुरराडिव ॥ ७४५ ॥
गुलाब् शक्कर् तवर्जद् च दर्पघ्नमुभयं स्मृतम् ॥
बदल् फूफल निर्दिष्टं मात्रा नीम दिरम्--मिता ॥ ७४६ ॥

संदल–अहमर । रक्तचन्दनम् ।

शीतं रूक्षं द्विधा रक्तपित्तशोथं लयं नयेत् ॥
वश्यं नेत्र्यं च रक्षोघ्नं शक्तिः काबिज ईरिता ॥ ७४७ ॥

टीका–वरम् रा तहलील हिहद ।

मात्रा दिरम उद्दिष्टा बदल् फूफल् उदीरितः ॥
दर्पघ्नो बेदमुष्क स्यात्क्वाथे लेपे बुधोदितः ॥ ७४८ ॥

टीका–बावला फूल ॥

इति चतुर्दशवर्गः १४.

# अथ वर्गः पञ्चदशः १५.

## रदीफ़ ज्वाद ।

### जान-मेष ।

टीका-मेषः शब्दोऽयमुभयत्र वाचकः । फारसी गोस्पंद ॥

आविकं पललं स्निग्धमुष्णं च त्रिगुणं द्विधा ॥
आजकव्याद्वरं ज्ञेयं गुरु पाके समीरनुत् ॥ ७४९ ॥

### जरम्-उस्तूखूदूसऽस्त ।

टीका-दर रदीफ़ अलिफ़ गुफ्ते शुद-अकारवर्गे प्रागुक्तमेव ॥

### जूमरा ।

टीका-मेदमुष्कऽस्त, गोयंद रेहां गुफ्ते शुद । जरू हव्वतुल्खुज्रा-मेदः ।

रूक्षोष्णस्त्रिगुणं तीक्ष्णः सुप्रशस्तो हारिन्नवः ॥
सफ़र्जल्ह् दर्पहृत् काबिज् मुजफ्फिफ़्-शक्तियुग्मयुक् ॥७५०॥

इति पंचदशवर्गः १५.

# अथ वर्गः षोडशः १६.

## रदीफ़-तोय ।

### तवाशीर-त्वक्क्षीरी । वंशलोचन ।

रूक्षा त्रिधा द्विधाऽनुष्णा त्वक्क्षीरी हृद्रुजाऽपहा ॥
पित्तं रक्तं ज्वरं तृष्णामूष्माणं संनियच्छति ॥ ७५१ ॥
दवथुं वमथुं मर्छां वैकल्यं करणोद्भवम् ॥
बाह्यमाभ्यंतरं सद्योऽतिसारं ग्रहणीगदम् ॥ ७५२ ॥
शक्तिर्मुजिफ्फिफ़् गदिता मुकव्वी पक्वाशयस्याऽपि हृदो भिषग्भिः ॥
शस्ता सिता लाघवयुक्तमात्रा देया दिरम् १ मानमिता सुधीभिः ७५३
गुलाब किंवा किल मस्तगी वा तथा अनेसूं विकृतिघ्न उक्तः ॥
श्रीखंडमर्द्धं सितरश्मिरस्या एर्वारुमज्जात्रिगुणोऽथवा स्यात् ॥ ७५४ ॥
चतुर्गुणो वाऽथ बजर्कतूना मख्तूम गिल् तुख्म च कासनी वा७५५

उस्सारह् लघुतुतीस तत्कार्यकरणक्षमाः ॥
एते बदल आख्याताश्चंदनाद्या भिषग्वरैः ॥ ७५६ ॥

तुहिलब । जंबाऊः-शिवालः । काई ।

शस्तस्तरंगिणीजातः शीतः स्निग्धस्त्रिधा द्विधा ॥
लिप्तोऽलिकेसनासाऽस्रस्तंभनं तनुते ध्रुवम् ॥ ७५७ ॥
पित्तरक्तभवां संधिप्रपीडां दाहमुल्बणम् ॥
प्रदेहाद्ब्रह्मरंध्रस्य पिपासाहा च कद्भवेत ॥
मायुल्रेहा तु दर्पघ्नं बदल आबी गिल स्मृता ॥ ७५८ ॥

**टीका**—प्रतिनिधिर्जलातमृत्स्ना ॥

तरासीस-तरसीस ।

रूक्षं शीतं त्रिधा ग्राहि पक्काशयपक्ढितम् ॥
मात्रा मिस्काल-मानाऽस्य शस्तमर्जुनभं स्मृतम् ॥ ७५९ ॥
नजफुल्दम् विनाशाय दक्षं क्षुण्णलवाद्भवेत ॥
समग्वी अफस जुफ्तवलूत बदल स्मृताः ॥
७ गुलऽनारऽपिसंप्रोक्तमिति तुर्या ४ श्चिकित्सकैः ॥ ७६० ॥

**टीका**—दर्पघ्न कसीरा । नजफुलदम्-रक्तनिष्ठीवनम् ॥

तरखून-आकारकरभः आकरकरहा ।

बुस्तानी खूब-निर्दिष्टो रूक्षोष्णस्त्रिगुणं द्विधा ॥
किञ्चिच्छीतं समाचष्टे रसनेंद्रियमूर्छनः ॥ ७६१ ॥
कटुतिक्तकषायादिविरेकवमनौषधात् ॥
अर्वाक्किंचित्समाशितस्तद्रसेनैव बोधयेत ॥ ७६२ ॥
अवांतिकृत्कंठरुजं पिपासां कामं निकामं हरसात्करोति ॥
करफसदर्पघ्न उदीरितोऽस्य मात्रां यथायोग्यमुशंति वैद्याः ७६३ ॥

**टीका**—शक्तिः मुखद्दिर् अत एव शीतोऽपि हरारत् गरीजीरा साकित् खामोश गर्दानद जीवोष्मणः प्रशमनत्वात् ॥

तुर्फा-कज झाऊ ।

रूक्षो द्विधा त्रिधाऽनुष्णः शस्तोभस्तश्च दूरगः ॥
काविज् मुजफ्फिफ् द्वे २ स्तः शक्ती उक्ते भिषग्वरैः ॥ ७६४ ॥

मात्रा पंज ५ दिरम् दर्पहरं बादाम वा मधु ॥
दाडिमीमुकुलं ज्ञेयं बदल क्षतजाऽपहम् ॥ ७६५ ॥

तलक केकवत्अर्ज अभ्रक ।

शीतमेकगुणं रूक्षं द्विगुणं सिद्धसेवितम् ॥
संग्राहि शर्कराऽश्मर्योः संहारि कथितं बुधैः ॥ ७६६ ॥
रसै लिसानुल्हमल—भजाते पिष्टं प्रलेपात्सहसा हिनस्ति ॥
स्त्रीणां स्तनोत्थं श्वयथुं च कर्णमूलोत्थितं वै चिरकालभूतम्७६७॥

टीका—वरम् संदिपेन—स्तनश्वयथुः । वरम् खलफ उजनेन कर्णमूलभवः शोथः ॥

प्रभूतदोषकृत्प्लीह्नः कतीरा दर्पहा स्मृता ॥
बदल् सुम्मा सितः स्यातः प्रयोगेष्वगदंकरैः ॥ ७६८ ॥
अथाऽस्य मर्दनविधिः कृष्णाऽभ्रं ग्रावखण्डकैः ॥
युक्तं पेश्यां पुष्करेण निर्मलेन विमर्दयेत् ॥ ७६९ ॥
हिमखण्डैस्तद्वदेव मर्दनाच्छुद्धतां व्रजेत ॥
ग्राह्यमातपसंशुद्धं सिद्धं कार्यक्षमं भवेत ॥ ७७० ॥

तीन—मखनम । मृद्विशेषः ।

श्लक्ष्णाऽरुणा ग्राहिणी च समा तुर्यस्वभावतः ॥
शक्तिः काबिज् मुफर्रह् च मुकव्वी कलब स्मृता ॥७७१॥
मुदम्मिल् हाबिस ज्ञेया रक्तस्य भिषगुत्तमैः ॥
प्रक्षिपेदशितादन्तं वाससी क्षौद्रगन्धयुक् ॥ ७७२ ॥
बदल् तिर्याक वा तीन अर्मनी क्षतजाऽमये ॥
मिश्रिता शैलजाजेनासृजाऽऽतंकविघातकृत् ॥
चराचरविषघ्नी स्यात्क्षारोष्णपयसाऽशिता ॥ ७७३ ॥
पीता शर्बत अंजुवार—सहिता नफ्सुद्दम—ध्वंसिनी ॥
तद्वद्बीजभवे नलोणिपयसा रक्ताऽतिसाराऽपहा ॥
शीर्ष्णो हरकमलस्य च द्रविणदा मात्रा दिरम्—सम्मिता ॥
सन्तापं हरति क्षणेन च यथा पूर्णः सुधादीधितिः ॥ ७७४ ॥

तीन-अर्मनी ।

रूक्षा शीतैकधा शर्बत् अंजुवार-युताऽशिता ॥
रक्तपित्तं निबध्नाति पीनसं तमकं जयेत् ॥ ७७५ ॥
फुप्फुसस्य क्षतं पूर्णं विदध्याज्ज्वरनाशिनी ॥
नीम मिस्काल मात्राऽस्या गुलाब विकृतिं हरेत् ॥ ७७६ ॥

टीका-बदल तीनलाकी ॥

तीनकुब्रसी । गिलेऽस्तगुलग्रुन ।

खंडितांवभवेत्पीता रेखाभिर्निचिता पुनः ॥
शोणवर्णा च सपदि जायते करमर्दिता ॥ ७७७ ॥
शीता रूक्षैकधोष्णाऽथो आस्यसौरभ्यकृन्मृदुः ॥
भग्नसन्धानकृत् रोगन्गुल् गुलाबयुताऽथवा ॥ ७७८ ॥
प्रलेपादशिता सद्यो रक्तष्ठीवननाशकृत् ॥
रक्ताऽतिसरणं हंति गिलमखतूम बदल् मतः ॥ ७७९ ॥

तीनफारसी गिलसरशोय ।

प्रशस्ता पाटला रूक्षा शीता चैकगुणा स्मृता ॥
वजर्कुतूना-सान्द्राम्भः पिष्टा लेपान्नियच्छति ॥ ७८० ॥
कशनीज्तर-नीरेण तथैव परिकल्पिता ॥
रक्तशोथं द्विमिस्कालमात्रा प्राशे प्रकीर्त्तिता ॥ ७८१ ॥
बदल् च गिलहा दीगर् प्रतिनिधिरपरा मृदः ॥ ७८२ ॥

इति षोडशवर्गः १६.

# अथ वर्गः सप्तदशः १७.

## रदीफ-जोय् ।

जुफरा-पोदीना ।

टीका-वरीतवर्गे वक्ष्यते ॥

जफीरतुल्, अजूज, खारखस्क, जिलफ् खुम्-शफम्-खुर ।
सामान्यः शिशिरो रूक्षस्त्रिधा च प्रकृतौ नवः ॥
तथा च पुरुषः शस्तो मस्का दर्पहरं स्मृतम् ॥ ७८३ ॥

बदल शाख तदीयस्य यदीयं शफमादिशेत् ॥ ७८४ ॥

टीका-शाख-विषाणम् । तत्र शफविशेषगुणाः ॥

जिलफुलगनम्-सुम् बुज । अजशफम् ।

शीतं रूक्षं त्रिधा भस्मीकृतं सिर्का-प्रलेपतः ॥

दायल्हथे विकारघ्नं वारुण्या विषदंशहृत् ॥ ७८५ ॥

बाबूना-भवनीरेण तथा क्षौद्रेण लेपतः ॥

निक्रिस् वजेमुफासिल् रा शफे सांजद्-विनिश्चयः॥७८६॥

जिलफुल्लीस सुम्, बुजकोही-गिरिसंभवाजशफम् ।

टीका-प्रकृतिः प्राग्वत् ॥

तद्भस्म मधुयुग्वस्तिप्रलिप्तं मूत्ररोगहृत् ॥

कुष्ठघ्नं शिशुमूत्रेण मधुना च तथोदरम् ॥ ७८७ ॥

वातश्लेष्मभवं शूलं हंति धूपाच्च भूतनुत् ॥ ७८८ ॥

इति सप्तदशवर्गः १७.

# अथ वर्गोऽष्टादशः १८.

## रदीफ ऐन् ।

आकरकराहा । आकारकरभः ।

टीका-तरखून । तोयवर्गे प्रागुक्तः । स्वरूपगुणप्रकृतिरपि किंचिद्विशेषात्पुनरुच्यते ॥

क्षौद्रेण युक्तः परिसेवितोऽयमपस्मृतेर्मानुषमांद्यमध्यात् ॥

समुद्धरत्याशु च लुप्तसंज्ञं ग्राहाद्गजेन्द्रं हि यथा रथांगी ॥७८९॥

पक्षनाशविनाशी स्याद्धलासबलनाशनः ॥

प्रातर्जयति गंडूषान्निशि सिर्का-द्रवे स्थितः ॥ ७९० ॥

कवोष्णो रदनानां च दंष्ट्राणां वेदनाऽऽमयम् ॥ ७९१ ॥

टीका-दष्ट्रा जिरस् खूब गजीदह जबान-प्रशस्तो रसनेंद्रियोद्वेजक इति । फर्वेह पुष्टः अंदरूत सुफेदी मायल अन्तःशुभ्रः ॥

मात्रा दिरम १ दर्पघ्नी मबीज् या रुब्बसुम च ॥

बदल् फूननज् गंडूषविधौ ख्यातो मनीषिभिः ॥ ७९२ ॥

वही रासन कृष्णौ च कचिन्मधुसमीहितम् ॥ ७९३ ॥

टीका–कृष्णावित्यत्रैकशेषः ॥

अदस–मांगल्यकः । मसूरः ।

औष्ण्याऽनौष्ण्यसमो रूक्षो द्विधा शीतश्च निस्तुषः ॥
संग्राही वातचयकृत्प्राचुर्य्यादक्षिमांद्यहा ॥ ७९४ ॥
शक्तिः काबिज खूब स्यादंतः शोणो बहिः सितः ॥
दर्पघ्नो राजियानाऽस्य बरग सातर एव च ॥ ७९५ ॥
पललं वा बदलू माय वाकला वाऽस्य संभवेत् ॥ ७९६ ॥

असल अंगवीन–मधु । शहद ।

वसंतांते तपादौ यत्संगृहीतं चिरस्थितम् ॥
रूक्षोष्णं त्रिगुणं मेदःक्लेदसंशोषणं लघु ॥ ७९७ ॥
कुस्त–युक्तप्रलेपेन भवेत्सिध्मेध्मपावकः ॥
इंद्रानी मिलहू युक्तं कवोष्णं श्रवणाऽर्पितम् ॥
दर्द गोश दवी नाशसमर्थं तत्क्षणाद्भवेत् ॥ ७९८ ॥

टीका–दवीकर्णेऽव्यक्तः शब्दः ॥

चतुर्गुणांभसा मिश्रं प्रातः पीतं जयेद् ध्रुवम् ॥
गौरवं वक्षसो दोषसंचयं रक्तशोधनम् ॥ ७९९ ॥
पक्षनाशं सकंडूकं तथा वाह विवर्द्धनम् ॥
नवं दुष्टं प्रभूतं च वांत्युत्क्लेदकरं सरम् ॥ ८०० ॥
दाडिमं बीजपूरं च जरष्क च–विकारनुत् ॥
मात्रा मिस्काल पंज ५ श्रीर्मुजल्ली च मुदम्मिल ॥८०१॥

टीका–श्रीः शक्तिः ॥

अस्फूर, असाफीर, कुंजष्क–कलविंकः ।

स द्विधाऽभिहितो वन्यो गृह्यश्च गुणवेदिभिः ॥
तयोर्गृह्यो वरगुणो ह्यनेकाऽन्नरसाऽशनात् ॥ ८०२ ॥

टीका–वन्यः सहराई वेरीं दश्ती बहिंशी त्रिगार्याया: ह्यः–खानगी प्रशस्तः ॥

स यथा–

स्निग्धोष्णरूक्षः कुसुमेषुदीपनः शैथिल्यपक्षाऽपहृतिं हिनस्ति ॥
तवूली च लक़्मी च जकी त्रिलिंगं चिरोत्थितं वै जठरामयं च ८०३॥

अशर्–अर्कः आक।

रूक्षोष्णस्त्रिगुणोऽत्यंतं वातशैत्यविकारहा ॥
विदाही सारकस्तीक्ष्णः श्लेष्मघ्नः कासनाशनः ॥ ८०४ ॥
कंठस्य रोधे चंडांशुसुतः पाशक्रियाकरः ॥
दवा सम्मी समादिष्टो मुह्तारिकू शक्तिसंयुतः ॥ ८०५ ॥
यथा युक्ता स्मृता मात्रा वज्री प्रतिनिधिः स्मृतः ॥
दर्पघ्नी स्थित्युदारा स्याद्विहिता शिशिरांभसि ॥ ८०६ ॥

अफस–माजूफल ।

शस्तमच्छिद्रपालाशं शीतं रूक्षं द्विधा त्रिधा ॥
शक्तिः काबिज रक्तस्य हाविस् उक्ता भिषग्वरैः ॥ ८०७ ॥
मात्रा दिरम १ दर्पघ्नं लबूसनोवर ईरितम् ॥
बदल् जुफ्तवलूत स्याव समूरे तुर्फा तथैव च ॥ ८०८ ॥
तव्वलास तथा पोस्त अनार परिकल्पितः ॥
पायुनिःसरणं सोमं हंति क्वाथेऽस्य संस्थितिः ॥ ८०९ ॥

अकीक–मणिविशेषः ।

श्लक्ष्णः शोणः प्रशस्तः स्यादेकधा रूक्षशीतलः ॥
तद्भस्म नीम मिस्काल–मितं भुक्तं द्रुतं जयेत् ॥ ८१० ॥
शर्बत्–सेव समायुक्तं हृद्रोगं च चिरंतनम् ॥
प्रसारणेन दंतानां दाढर्यंनैरुज्यकारकम् ॥ ८११ ॥
क्षते क्षतजसंरोधं क्षिप्रं क्षिप्तं करोति हि ॥ ८१२ ॥

अकल, देवचा–जलौका । जोंक ।

सोफे नुमूले तथा रक्तप्रकोपे श्वयथौ पुनः ॥
ग्रंथिगंडाऽपचीस्फोटदुष्टाऽसृक्परिकर्षिणी ॥ ८१३ ॥

टीका–सोफा नुमूला अस्त्रविकारौ शिरसि पीताऽरुणवर्णाः पिडिका क्षतोद्भूमो घनःक्रमाद्विज्ञेयः॥

१ क्षालनं केशरंजनम् ।

वातलो वदनस्पर्शोऽमुष्यारक्तस्रुतेरतः ॥
भाग्वातशीतनीराभ्यां संरक्षेन्मानुषं भिषक् ॥ ८१४ ॥
सुधामुखीयं प्रभुणा विनिर्मिता साध्यं तथा याप्यरुजाऽस्रसंचयम् ॥
ग्रसेद् ध्रुवं दैत्यगणं यथा पुरा काली कपालाऽऽभरणा शिवेव सा ८१५
स्रोतस्विनीभवाऽवीतवत्सरा महतीतरा ॥
नितरां तुर्यदोषाणां शस्ता संशोधने स्मृता ॥ ८१६ ॥

अरुकुलसवागेन, जर्दचोब-रजनी। हलदी।

रूक्षोष्णा त्रिगुणं सद्य आघाताऽर्तिनिवारिणी ॥
भग्नसंधानकृद्रक्तकोपशोथनिषूदिनी ॥ ८१७ ॥
गंडमालाऽपचीग्रंथिविस्फोटातंकनाशिनी ॥
मुलत्तिफ मुजल्ली च मुहल्लिल् मुकयी तथा ॥ ८१८ ॥
मुकत्तय् रुधिरस्याऽपि शक्तयः पंच ५ विश्रुताः ॥ ८१९ ॥
बदल् दार्वी च दर्पघ्नी चंद्रबाला कृता बुधैः ॥
मात्रा योग्या यथास्थानं वैद्यवर्यैः प्रयुज्यते ॥ ८२० ॥

इनब, अंगूर-द्राक्षाऽऽर्द्रा।

त्वग्बीजमस्याः शिशिरं च रूक्षं द्विधा रसाभ्यंतरमुष्णमेकधा ॥
स्निग्धं च पीनत्वकरी सुवर्ण्या वीर्याम्बुधिः स्यात्कुसुमेषुदीपिनी ८२१ ॥
प्रभंजनं मायुमथाऽस्रपित्तं हृद्या पिपासां दवथुं महान्तम् ॥
श्वासं ज्वरं कासमुरःक्षतं च स्वराऽर्त्तियक्ष्माणमियं हिनस्ति ॥ ८२२ ॥
शस्ता सुपक्वा सरसा च मृद्वी गुलंगवी दर्पहरः प्रसिद्धः ॥
शक्तिर्मुगज्जी च तथा मुजल्लीमुदिर् मुलय्यन्मुसद्दी पुनश्च ८२३ ॥

टीका-बदल्-जवीच ॥

एलान, नाशपाती, नाख-मृदुलता।

शीता स्निग्धा द्विधा धातुपुष्टिकृद्बलवर्द्धिनी ॥
हिता रेतोऽसृजो वृद्ध्यै अमरूद बदल स्मृतः ॥ ८२४ ॥

टीका-मुस्लिह, करनफल ॥

---

१ द्रुतम् इत्यपि पाठः।

उन्नाब-निष्कण्टकबदरीफलविशेषः।

चतुर्गुणं समं भावे पित्तरक्तनिबर्हणम् ॥
हृद्दाहं मायुक्षवथुं तमकं दुर्जयं जयेत् ॥ ८२५ ॥
वृक्कवस्तिव्यथां हन्यात् हस्बे जद्री-तपाऽपहम् ॥
खशूनत् हल्क सीने हम् रफे गर्दद् समश्नतः ॥ ८२६ ॥
स्वरसं तु स्मृता मात्रा संख्यया विंशतिः परा २० ॥
शक्तिद्वयमिहाऽऽख्यातं मुलय्यन मुलत्तिफ ॥ ८२७ ॥

टीका-हस्बे जद्री स्थूला सूक्ष्मा शीतला। खशूनत् हल्क सीने-कण्ठवक्षसोः श्लेष्मणः शुष्कतासम्भूतं जरठत्वम् ॥

साष्टिपिष्टमशितं दिवानिशं कर्षमात्रमवचेदनाक्षतम् ॥
शीतवारिपरिपीतमंजसा कोष्ठशुद्धिकरणं स्मृतं बधैः ॥ ८२८ ॥

टीका-हिनस्ति सन्धत्त इति च शेषः ॥

अंबर-सुगंधिविशेषः।

द्वीपांतरस्थस्य वृषस्य फेनो रोमन्थजो अम्बर-नामधेयः ॥
सौरभ्यसंपन्नतृणाशनाद्यः कस्तूरिकातुल्यगुणाकरः स्यात्॥८२९॥
सौरभ्यसंपन्न उदग्रवीर्यो रूक्षोष्णवीर्यो द्विगुणं च सूक्ष्मः ॥
शैत्यं समीरं च बलासकोपं वेगं निरुन्ध्याद्दनितोत्तमानाम् ॥
स्मरप्रदीपेन सदांधकारं नरस्य दत्ते प्रमदाख्यरूपम् ॥ ८३० ॥

टीका-'मुत्प्रीतिः प्रमदो हर्षः' कोशोऽमरः। जोहर अर्वाह-नाम्ना प्रथितः ॥

मुकव्वी दिल् दिमाग-स्यात् समगर्वी तु दर्पहा ॥
आघ्राणं सितरश्मेर्वा कर्कटीप्राशनं तथा ॥ ८३१ ॥
जाफरां मुश्क बदल-द्वयमुक्तं भिषग्वरैः ॥
मात्रा माषोन्मिता श्रेष्ठा यथादोषमथाऽपि वा ॥ ८३२ ॥

ऊद हिंदी-अगरुः।

कृष्णाऽगरुर्गुरुः श्रेष्ठः पुरुषो नीरनिम्नगः ॥
निस्तुषोऽशिशिरो रूक्षो द्विधा सुद्दे कुशा स्मृतः ॥ ८३३ ॥

टीका-स्रोतःसंशोधन इत्यर्थः ॥

वाताऽनुलोमनः श्लेष्मखंडनो गृहमंडनः ॥
धूपेन श्रीकरः क्लेदशोषणः पोषणो हृदः ॥ ८३४ ॥
शीर्ष्णः कलाशिराजालबंधस्य बलवर्द्धनः ॥
दर्पघ्नोऽस्य गुलाब स्या दिरम् १ मात्रा प्रकीर्तिता ॥ ८३५ ॥
चंदनं दारचीनी या जाफरां मस्तगी तथा ॥
सुंबलऽतीव वा ग्राही क्रमाद्बदल ईरिताः ॥ ८३६ ॥
इनब, सालिब, अंगूरक, अंगूरशफ़ा, मकैना, मकोय ।
स्निग्धा शीता द्विधा शस्ता क्षितशोणफला क्रमात् ॥
स्वरसोऽस्याः प्रलेपेन पित्ताऽस्रश्वयथुं हरेत् ॥ ८३७ ॥
गंडूषः कंठरोगघ्नोंजितोऽक्षितिमिराऽपहः ॥
आर्तवस्तंभनं मात्रा मिस्काल ३ त्रयमुत्तमा ॥ ८३८ ॥
चस्तेरहितकस्माज्या दर्पघ्नः कंद ईरितः ॥
किंवा क्षौद्रमथाऽमुष्य बद्दल सादावरान् इह ॥ ८३९ ॥
सादावरान निर्य्यासी गिर्दगां—वृक्षसंभवः ॥
क्षतम्—तरुसमुत्पन्नोऽथवा प्रोक्तश्चिकित्सकैः ॥ ८४० ॥

इत्यष्टादशवर्गः १८.

## अथ वर्ग एकोनविंशः १९.



### रदीफ़ गैन् ।

गाफित, गाफिस, गुलखेल—कुसुमविशेषः ।

सूक्ष्मवृत्तं प्रसूनं स्यात् लाजवर्दी च वर्णतः ॥
सांगो वृक्षोऽस्य तिक्तोऽस्ति सिन्नुतुल्यरसः स्मृतः ॥ ८४१ ॥
अशीतमेकगुणितं रूक्षं द्विगुणमीरितम् ॥
प्लीहशोथं यकृच्छोथं ज्वरं जीर्णं निषूदयेत् ॥ ८४२ ॥
मुलत्तिफ मुकव्वी च यकृतः कुव्वत स्मृतेः ॥
नीम मिस्काल मात्राऽस्य अनेसूं दर्पहारिणी ॥ ८४३ ॥

अफ्सन्तैन असारून द्वयं बदल उच्यते ॥ ८४४ ॥
मूत्राऽऽर्तवाऽतिसरणं विधत्ते वातरोगहृत् ॥ ८४५ ॥

गारयक ।

रूक्षं त्रिधैकधा चोष्णं शस्तं मृदु तथाऽर्जुनम् ॥
मुहल्लिल् मुसहिल् वलगम् सौदा दोषस्य कीर्त्तितम् ॥ ८४६ ॥
मुफत्तिह मुकतयच शक्ती मात्रा दिरम् १--मिता
शिकंजवीं मस्तगी च द्वयं दर्पघ्नमादिशेत् ॥ ८४७ ॥
बदल् तुर्बुद अफ्तीमून फर्कयून सिवन् तथा ॥
अथवा खर्बक ज्ञेयो दोषाणां शोधने क्रमात् ॥ ८४८ ॥
कूलिंज निक्रिस तथा इरकुन्निसा च ॥
क्षीर्णज्वरत्रिककटीभवपृष्ठपीडास् ॥
संध्यर्त्तिमाशु गुरुतां हृदयस्य हन्या-
त्संन्यासधर्म्मं इव हृद्विषयान्समस्तान् ॥ ८४९ ॥

गवीरा, संजद । चोबदाना ।

द्विधाऽनुष्णश्च रूक्षश्च संग्राही वांतिनाशनः ॥
पक्वल्या हितोऽत्यंतं फानीज विकृतिं हरेत् ॥ ८५० ॥
प्रशंस्तः पीवरः फिदक्र बदल् उक्तो मनीषिभिः ॥ ८५१ ॥

गुवार, रिहा, गर्द, आसिया ।

टीका-घरट्टोड्डीयमानं चूर्णम् ॥

कश्नीज-तर-नीरेण पिष्टं मौलिप्रलेपनात् ॥
सद्यः स्तम्भाति नासाऽस्रं यथा योगी समीरणम् ॥ ८५२ ॥

गुरव-पाठा । पाठ ।

एकधा शिशिरा रूक्षा शक्ती काबिज् मुजफ्फिफ ॥
त्वग्भस्माऽस्याः प्रलेपेन सिर्का-युक्तं व्रणान्हरेत् ॥ ८५३ ॥
निक्रिस् बजेमुफासिल्रा कषायो नावनाऽशनात् ॥
शिफा-पत्रसमुद्भूतः पद्मिनो मृगराडिव ॥ ८५४ ॥

गिजाल-गिआहू। हरिणः।

ऐणं पलं द्विधा शीतं रूक्षं वृष्यं तथैकधा ॥
मेध्यं मुलत्तिफ ख्यातं शेषमाजसमं विदुः ॥ ८५५ ॥

इत्येकोनविंशतितमो वर्गः १९.

## अथ वर्गो विंशतितमः २०.



### रदीफ फ।

फानीज-बतासे।

विशदा लघवः शस्ताः स्निग्धोष्णा वा समाः स्मृताः ॥
शक्तियुग्ममिहाऽऽदिष्टं मुजल्ली च मुलय्यन ॥ ८५६ ॥
एषां शबत संपीतं पित्तं कासं वमिं क्लमम् ॥
ज्वरं संतमकं हंति मृत्युभीतिमिवाऽमृतम् ॥ ८५७ ॥

फजल-तुख-मूलम्।

उष्णमेकगुणं रूक्षं द्विगुणं मूत्रलं सरम् ॥
स्तन्यसंशोधनं कासदुर्नामग्रहणीहरम् ॥ ८५८ ॥
मूत्रकृच्छ्राश्मरीं कासं हिनस्ति परिषेवितम् ॥
स्वरसः पत्रसम्भूतो मूलसम्भृत एव वा ॥
मूत्राऽऽघातं द्रुतं हंति यवक्षारसमन्वितः ॥ ८५९ ॥
पटुना मधुना युक्तः सद्यो वान्तिविधायकः ॥
शिकंजवीं-युतो वाऽपि शीघ्रं दोषविशोधनः ॥ ८६० ॥
मुकत्तय् मुलत्तिफ् मुगश्शी-
प्रभावैर्युतं खूब ताजे गुलिस्ताँ-भवं च ॥
स्मृतं सारघं दर्पहार्यस्य मात्रा
दिरम्-द्विद्धिता १० निर्मिता वैद्यवर्यैः ॥ ८६१ ॥

फर्फयून-शीरजकूम--स्नुहीक्षीरम्।

त्रिधा रूक्षं चतुर्धोष्णं दवासम्मी प्रकीर्तितम् ॥
स्पर्शादक्षिरदध्वंसि भवेद्रक्तप्रकोपनम् ॥ ८६२ ॥

कीटदंशविषनाशनं शुनो दंशदोषहरणं प्रलेपनात् ॥
शूलपक्षनशनार्दितं तथा संधिवातकटिपृष्ठवेदनाम् ॥ ८६३ ॥

टीका–अपाकरोतीति शेषः ॥

विषकर्म्मकरं प्रायस्त्रिदिनं दिरम ३ त्रयम् ॥
भवेदत्यशितं हिक्कारक्ताऽतिसरणप्रदम् ॥ ८६४ ॥
मुकर्रह् मुसहिल् बल्गम् मात्रा ज्ञेया यथाबलम् ॥
अनार–द्रवमाज्यं च तक्रं दर्पहरं स्मृतम् ॥ ८६५ ॥

फरासयून–गन्दना–कोही ।

उष्णा चैकगुणं रूक्षा द्विधा सुद्दे कुशा परा ॥
संभवेत्प्लीहयकृतोर्वक्षःफुप्फुसयोर्भृशम् ॥ ८६६ ॥
श्लेष्मसंशोधिनी श्वासकासपार्श्वहृदाऽऽमयान् ॥
व्यपोह्यात्र्तवस्तंभभेदिनी सुतरां भवेत् ॥ ८६७ ॥
सुंबलऽतीव दर्पघ्नी मात्रा नीम दिरम् मता ॥
असारून अनेसून अफतीमून लुबान्अपि ॥ ८६८ ॥
बदल् जूफाऽथवा वैद्यैर्निर्णीता कार्यभेदतः ॥
मुफत्तिह मुकत्तय् च मुदिर्र गुण ३ शक्तयः ॥ ८६९ ॥

टीका–फरसाद–तूत । ते वर्गे प्रागुक्त एव । फर्फत्–शाहतरा । कल्याणा । शीन्–वर्गे पूर्वमुक्त एव ॥

फरंजमुश्क–तुलसी ।

रूक्षोष्णा त्रिगुणं शस्ता सुपक्का मंजरीयुता ॥
मुफत्तिह मुलत्तिफ् च शक्तिभ्यां समलंकृता ॥ ८७० ॥
नीम मिस्काल मात्राऽस्य ज्वरघ्नी कृष्णसंगता ॥
दर्पघ्नं चन्दनं शुभ्रं गुलाब अथवा स्मृतः ॥ ८७१ ॥
देवप्रसूनं बदल प्रसूताऽऽतंकनाशिनी ॥ ८७२ ॥

फिस्तक्–पिस्ता । मुकूलकः ।

द्विधोष्णस्त्रिगुणं स्निग्धो मुफत्तिह् मुबह्ही युतः ॥
नवः पीनः प्रशस्तः स्यान्मात्रा कर्षोन्मिता भवेत् ॥ ८७३ ॥

जर्दालू खुश्क दर्पघ्नः कर्कटीबीजमेव वा ॥
बदल बादाम या मग्ज जोज फिन्दक इत्यपि ॥ ८७४ ॥

फित्र असालयून-करप्सकोही ।

टीका-शैलसम्भवाऽजमोदयाः किंचिद्वरगुणसम्पन्ना ॥

फिल्फिल् मोथा । ग्रन्थिकम् । मूढ ।

द्विधोष्णरूक्षं पवमानकोपं कफान्तकं शूलनिबर्हणं च ॥
पयोऽनुपीतं तनुते तनुं यत्कान्तान्तिके काम्यरतेऽतनुं च ॥८७५॥
मात्रा मिस्कालमानाऽस्य दर्पघ्नं क्षौद्रमीरितम् ॥
नारमुश्क कणा चाऽपि मूरंजाँ बदल स्मृताः ॥ ८७६ ॥

फिलफिल-बर्री । तुख्मपंजगुश्त-निर्गुण्डीबीजम् ।

टीका-वे वर्गे प्राङ्निरूपितमेव ॥

सिर्का-संगतलेपेन प्लीहवृद्धिं नियच्छति ॥ ८७७ ॥

फिलफिल-अबियज । श्वेतमरिचम् ।

टीका-शिग्रुबीजमिति केचित ॥

त्रिधोष्णरूक्षमुदितं माधुल्असल-संयुतम् ॥
अजीर्णपाचनं सद्यो बुभुक्षापरिदीपनम् ॥ ८७८ ॥
मूत्राऽऽर्तवाऽतिसरणं सरं प्लीहाऽभिवृद्धिनुत ॥
श्लेष्म-सौदा-विकारघ्नं वृक्कयोरहितं भृशम् ॥ ८७९ ॥
दर्पघ्नं मधु संख्यातं नागरं बदल स्मृतः ॥
नीम मिस्काल मात्राऽस्य मुसम्रिखन् शक्तिरुच्यते ॥ ८८० ॥

फिल्फिल-अस्वद-स्याह गिर्दे-मरिचम् ।

रूक्षोष्णं द्विगुणं छेदि पित्तरक्ताऽविरोधि च ॥
श्लेष्मजालाऽसिसदृशं सन्निपातज्वरान्तकम् ॥ ८८१ ॥
श्वासकासाऽनिलं शूलं हिक्कां हंति समीरजाम् ॥
ग्रंथिगण्डाऽपचीकर्णमूलं च कवलीकृतम् ॥ ८८२ ॥
समस्तनेत्ररोगघ्नं सितया सर्पिषा युतम् ॥

---

१ तस्कीन गर्मी तद्विघ्नयिनीत्यर्थः ।

गोमूत्रयावशूकाभ्यां लेपाद्विस्फोटकुष्ठनुत ॥ ८८३ ॥

टीका–पामा विस्फोटांतर्भावः ॥

पलाण्डुरसयुक्तेन लवणाक्तेन लेपतः ॥
दायुः सालिब–संहारि मात्रा मिस्काल–मानभृत ॥ ८८४ ॥
मुलत्तिफ मुगश्शी च मुसस्विन मुलय्यन ॥
चतस्रः ४ शक्तयः सिद्धाः स्वस्वकार्यक्षमाः स्फुटाः ॥ ८८५ ॥
दर्पघ्नं शर्करा सर्पिः क्षीरं क्षौद्रं च शालयः ॥
उषणा बदल श्रेष्ठाऽथवा मरिचमर्जुनम् ॥ ८८६ ॥

फूतनज–पोदीना। गेरबागी।

टीका–अनुद्यानसम्भवः स च त्रिविधः–कोही १ बरीं २ नहरी ३ तत्र ॥

प्रशस्तो नगसम्भूतः पालाशः सुरभिर्नवः ॥
त्रिधोष्णरूक्षो वातघ्नः सद्यः स्वेदप्रवर्तकः ॥ ८८७ ॥
मुदिर् मुलत्तिफ प्रायो मुलय्यन् शक्तिसेवितः ॥
सी ३ मिस्काल कषायोऽस्य षडंशमधुसंयुतः ॥ ८८८ ॥
कोष्णः पीतो वमथुना कोष्ठसंशोधनो भवेत् ॥
आर्त्तवप्रेरकस्तीव्रो मृतभ्रूणनिपातनः ॥ ८८९ ॥
मिस्काल १ द्वय–सी मात्रा कतीरा दर्पकर्षणः ॥
अन्त्राणामहितोऽत्यन्तं बदल् बागी उदीरितः ॥ ८९० ॥

फूफल–क्रमुकः। सुपारी।

हिमो रूक्षो द्विगुणितं क्लेदाऽसृक्पारिकर्षणः ॥
हृच्छीर्णोर्बलदो ग्राही कण्ठाक्षिदहनाऽपहः ॥ ८९१ ॥
खूब जर्रीन मात्रा तु दिरम् दह् १० सम्प्रकीर्तिता ॥
दर्पघ्नः समग ख्यातो बदल् लोहितचन्दनम् ॥ ८९२ ॥

इति विंशतितमो वर्गः ॥ २० ॥

---

१ लेपादिषु।

# अथ वर्ग एकविंशतितमः २१.

## रदीफ-काफ ।

कीकलह, हील, सगीर । कबीर खुर्द कलां । इलायची छोटी बडी ।

समा तुर्य्यनिसर्गेषु कश्मलाऽपस्मृतिं तृषम् ॥
बलासकासदाहाऽस्रपित्तज्वरमुरःक्षतम् ॥ ८९३ ॥
जुगुप्सां वमथुं हिक्कां प्रलापं मेहसंहतिम् ॥
शिकञ्जवीं-युता श्वासमूत्रकृच्छ्राऽश्मरीर्हरेत् ॥ ८९४ ॥

टीका-मात्रा नीम दिरम् । दर्पघ्नो गुलाब । बदल अन्योन्यम् ॥

क़रनफ़ुल-देवपुष्पम् । लवंग ।

रूक्षोष्णं त्रिगुणं नेत्र्यमास्यदौर्गंध्यनाशनम् ॥
रात्र्यंध्यमञ्जनाद्धन्ति यकृतो द्रविणप्रदम् ॥ ८९५ ॥
बिंदुशो मूत्रणं मूत्राऽतिसारं ग्लानिशीतताम् ॥
पक्वगर्भाशयाऽर्त्तं च कासं श्वासं हृदामयम् ॥ ८९६ ॥
शूलं वातबलासोत्थं हंति पुष्पेषुदीपनम् ॥
प्रशस्तं सरसं दीर्घं शोणं श्यामं च पीवरम् ॥ ८९७ ॥
मात्रा दिरम १ दर्पघ्नः समगर्बी समीरितः ॥
फरंजमुश्क बदल अन्त्राणामतिदोषकृत् ॥ ८९८ ॥

किर्तास, कर्गल । कागज ।

भस्माऽस्य नावितं नासास्रुतं रक्तं रुणद्धि हि ॥
दिरमे १ प्राशितं सद्यः फुप्फुसस्य क्षतं हरेत् ॥ ८९९ ॥

करयः-कद्दू राजकोशातकी ।

शस्ता नवा हरिन्मृद्वी स्निग्धा शीता कफप्रदा ॥
दाहं पित्तं ज्वरं मूर्छां पिपासां कण्ठशुष्कताम् ॥ ९०० ॥

टीका-हिनस्तीति शेषः ॥

गन्दना-संभवं वारि वारि चाऽस्याः सितायुतम् ॥
सप्रलापं सोपसर्गं संहरेज्ज्वरसंज्वरम् ॥ ९०१ ॥

सौदावी बल्गमी देहाऽहिवा शैत्यविकारकृत् ॥
विश्वौषधं दारचीनी दर्पघ्नं फिल्फिलेन च ॥ १०२ ॥

टीका–बदल कूष्मांडम् ॥

कीर–सर्ज्जरसः। राल।

उष्णश्चैकगुणं रूक्षो द्विगुणं क्ब्ज–कारकः ॥
जहीर–कर्षणो ह्यामभस्मीकरणचंचुरः ॥ १०३ ॥
शक्तिर्मुतफिफफ ख्याता वीतिहोत्रव्रणान्तकः ॥
सिता दर्पहरी ज्ञेया ब्दल् प्रोक्तस्तु कुन्दुरुः ॥ १०४ ॥
सिक्थकं सुकल कीर–सर्पिषा पाचितं द्रुतविपादिकाऽपहम् ॥
सद्य एव भृशयातनाहरं शीर्णदीर्णपदपाणिपूरणम् ॥ १०५ ॥
वीसर्पस्फोटहृल्लेपाद् धूपाज्ज्वरपरेतनुत् ॥
श्रीकरो दद्रुपामाघ्नो अर्वे ४ अख्लात–शोधनः ॥ १०६ ॥

टीका–मात्रा दिरम् १० ॥

कुस्तशीरीं–पुष्करमूलम्। कुस्तवलख। कुष्ठम्। कूट।

रूक्षोष्णं स्यात्त्रिगुणितं मधुना संप्रलेपितम् ॥
कुष्ठसिध्महरं प्राशान्मूत्र–हैज–प्रवर्तकम् ॥ १०७ ॥
मेध्यं मृतभ्रूणहरं क्षते क्षिप्तं च शोषणम् ॥
कषायः सलिलः पीतः संहरेद् यकृतो रुजम् ॥ १०८ ॥
क्षोदः शिकंजवीं–युक्तो ज्वरं चातुर्थिकं जयेत् ॥
उदिता दिरमे १ मात्रा ह्यन्योन्यं बदल स्मृतम् ॥ १०९ ॥
गुलकन्द प्रदर्पघ्नो मेवा क्षीराज्यमैक्षवम् ॥ ११० ॥

कनव–जुज्वक्षाजम्। विजया।

उष्णा द्विधा त्रिधा रूक्षा सुबही च मुनव्विम ॥
मुमसिक मुस्किर् मुफर्रह् च मुन्कबिज् शक्तयस्तु षट् १११॥
दर्पघ्नं शिशिरं नीरं तथा स्याद्दूषणं पुनः ॥
मात्रा भवेद्यथासात्म्यं दीपनो मधुरो रसः ॥ ११२ ॥

टीका–ने बदल ॥

कसबु-शकर । नय-शकर । इक्षुः ।

मिष्टोऽपटुः प्रशस्तस्तु पुंड्रनामा मृदुः सरः ॥
श्रमक्लमहरो वांतिपित्ताऽसृग्दाहनाशनः ॥ ११३ ॥
क्षवथुं दवथुं हंति वमथुं तमकं पुनः ॥
मूत्रलः कण्ठदाहघ्नो ग्रीष्मे वृष्यः सितासमः ॥ ११४ ॥

कसबुज्जरीरा- भूनिंबः । चिरायता ।

तिलनालसमः शस्तो द्विरूक्षोष्णो ज्वराऽपहः ॥
सन्निपातं च संध्यार्तिं कल्कः क्काथोऽस्य संहरेत् ॥ ११५ ॥
पक्काऽऽशययकृच्छोथ-इस्तिस्काऽऽमयनाशनः ॥
तक्तीरुल्बोल-बाधां च स्थित्या गर्भाशयाऽर्तिनुत् ॥ ११६ ॥
मुस्किन्-मुलत्तिफ द्वे २ स्तः शर्की दर्पविनाशिनी ॥
अस्लसूस समुद्दिष्टा कार्येषु निखिलेष्वपि ॥ ११७ ॥
सुंबल्ऽजफारुलऽत्तीव कुंकुमं हरिचंदनम् ॥
एते बदल आख्याता आयुर्वेदविदां वरैः ॥ ११८ ॥

कसब नय-नल ।

रूक्षोष्णमेकगुणितं भस्माऽमुष्य प्रमेहजित् ॥
शतपुष्पांभसा पीतं मूत्राऽऽतवनिरोधभित् ॥ ११९ ॥

कुतुन् पंबा-कार्पासः । रुइ ।

उष्णो द्विधा गुणद्वंद्वे समो ग्रंथ्यादिबंधनात् ॥ १२० ॥
भस्मीकृतः क्षते क्षिप्तो भवेत्क्षतजशोषणः ॥
रुआफ-स्तंभनो नस्याद्दलक्काथेऽस्य संस्थितिः ॥ १२१ ॥
गर्भाशयारोधकरी मज्जालेपो व्रणांतकः ॥ १२२ ॥

**टीका**-अगर, मग्जश, व आब, प्याज, हल्, नमूदह, वर, दमानील, तिला-कुनंद, तासुन्फजर, गर्दानद्-व्रणदारणपाचनः शोधनः शोषणश्च ॥

पलांडुरससंयुक्तप्रलेपाच्छीघ्रकार्यकृत् ॥
दर्पघ्नं रुब्बसूस स्यात् बदल बादाम संमतः ॥ १२३ ॥

इत्येकविंशतितमवर्गः २१.

# अथ वग्गा द्वाविंशतितमः २२.

## रदीफ़ काफ़-सानी।

### काफ़र-कर्पूर । कपूर ।

त्रिगुणं रूक्षशीतः स्यात् कशनीज़-रसयोगतः ॥
प्रलेपादुष्णशोथघ्नः क्षतजन्तुनिरासकृत् ॥ १२४ ॥
काहू--रसेन संयुक्तनावनाच्छीर्षदाहनुत् ॥
सुनञ्विम प्रभावाढ्यः स्मरं स्मरहरो यथा ॥ १२५ ॥

### काकनज-अरूसकदरयर्दें ।

त्रिगुणं शिशिरो रूक्षः श्वासं कासं च कामलाम् ॥
मूत्रकृच्छ्राऽश्मरीमेहान्क्रिमीनपि नियच्छति ॥ १२६ ॥
मुखर्हिर मुदिर स्यु-र्मुनञ्विम् शक्तयः पराः ॥
माजूनगुल दर्पघ्नी मात्रा बीजत्रयात्मिका ॥ १२७ ॥
इनबुः सालिब ज्ञेया बदल् वज्रल्किशाऽथवा ॥
अद्वितीयः कृतो धात्री वस्तिरोगाऽपकर्षणे ॥ १२८ ॥

### किबरीत-गोगिर्द । गन्धकः ।

रूक्षोष्णस्त्रिगुणं सिर्का-युक्तलेपेन कुष्ठनुत् ॥
पामाविसर्पश्वसने सर्पतुल्यपराक्रमः ॥ १२९ ॥
धूपो हंति प्रतिश्यायं पीनसं सुचिरंतनम् ॥
दर्पघ्नो गुलकन्द स्यात्पयः सर्पिरथाऽपि वा ॥ १३० ॥

### कशीस-कतीरा ।

समश्चतुर्द्वा क्षवथुं विरेकं स्वरस्य भेदं दवथुं वमिं च ॥
प्लुष्टं च दोषप्रचयं शरीरान्निरस्यति स्वर्गधुनीव पापम् ॥ १३१ ॥
अधः कायाऽहितोऽत्यन्तं अनेसूं दर्पकर्षिणी ॥
मात्रा द्वि २ त्रि ३ दिरम्--मानौषधीदाहविघातकृत् ॥ १३२ ॥

### करफ्स-अनमोदा ।

टीका-बीजप्रकरणे प्रागुक्ता ॥

कुराः सजबली-फरासयून-याने गंदना-कोही ।

टीका-फे वर्गे पूर्वं निरूपिता ॥

ककारेऽस्मिन्गकारांतर्भावः ।

गुलखार-व्याघ्रीः । कटेहल ।

क्षुद्रा त्रिधोष्णा श्वसनं बलासं कासं हिनस्त्येणगणं वै सिंही ॥
अतिप्रयुक्ता वितनोति मूत्रकृच्छ्रं महाकृच्छ्रमहोपसर्गम् ॥१३३॥

टीका-याविस बंदर्जे सियोग २ ॥

मात्रा कर्षोन्मिता क्वाथे क्षोदेऽर्द्धा दर्पहृन्मधु ॥
सिंहाऽऽस्यो बदूल प्रोक्तो नाम्ना ख्वाजे-गियाह सः॥१३४॥

टीका-सिंहाऽऽस्यो वासकः स चास्याः समानगुणत्वान्न पृथगुक्तः, किंच विशेषगुण एवातोऽत्र बदूल निर्दिष्टः ॥

कर्नब-कलम् ।

रूक्षोष्णो द्विगुणं कासकुष्ठसंध्यर्तिकुष्ठनुत् ॥
वर्ण्यः प्लीह्ने हितः स्वर्यः सरः पृष्ठपदाऽर्तिहृत् ॥ १३५ ॥
सौदा-दोषप्रदः प्रायो दर्पघ्नश्वरणायुधः ॥ १३६ ॥

करशफ, कुतुन, पंबा । कार्पासः ।

टीका-प्रथम काफ-वर्गे प्रागुदीरितः ॥

कुर्कुम-कुंकुमम् । जाफरां ।

टीका-जे वर्गे पूर्वोदित एव ॥

कुजवर कशनीज । कुस्तुम्बुरुः ।

त्रिधार्द्रः शिशिरः स्निग्धः शुष्को रूक्षश्च शीतलः ॥
स्वरसो बाकला-पिष्टयवपिष्टयुतोऽथवा ॥ १३७ ॥
खुनांजीर-हरो लेपादसृक्पित्तस्य शोथहृत् ॥ १३८ ॥
श्यामायाः प्रथमं पुत्रप्रसवाऽलंकृताऽऽत्मनः ॥
अंजितः पयसा प्रातर्नयनाऽऽमयनाशनः ॥ १३९ ॥
पाचनो दीपनो ग्राही वांतितृष्णोष्मखंडनः ॥
प्रभूतो भ्रमकृन्मात्रा दिरम २ द्वयमुच्यते ॥ १४० ॥

---

२ द्वेत्यर्थः ।

स्मृता शिकंजवीं आबी दर्पघ्नी गुल्शनी वरा ॥
मुकव्वी हृत्सरोजस्य काबिज् हाविस इत्यऽपि ॥ ९४१ ॥

काशम् अजदां रूमी।

रूक्षोष्णं त्रिगुणं शस्तं पीतं पीनं महद्दलम् ॥
बद्ल तुख्म गजन् ज्ञेयमेतद् गुणविशेषणम् ॥ ९४२ ॥

किश्मिश–मबीजबेदाना। क्षुद्रा द्राक्षा।

रूक्षोष्णैकगुणं कासवांतितृष्णानिबर्हिणी ॥
सरा च गोस्तनीकल्पा मुलय्यन्–शक्तिधारिणी ॥ ९४३ ॥
दर्पघ्नी बादियानऽस्याः प्रचुराऽऽध्मानकारिणी ॥
महती बद्ल द्राक्षा विनिर्णीता विचक्षणैः ॥ ९४४ ॥

कुमूसरी–अमरूद। आम्रातकः।

द्विधा स्यात्स्निग्धशिशिरं दिल् दमाग बलप्रदम् ॥
शस्तं काबिज् मुफर्रह् दिल् शस्तं स्याह सुपाकयुक् ॥९४५॥
वृष्यं च बृंहणं वर्ण्यं स्वर्यं रुच्यं तृषाऽपहम् ॥
मायुल् असल दर्पघ्नं विही बद्ल ईरितः ॥ ९४६ ॥

कमून–जीरकम्। जीरा।

रूक्षोष्णं त्रिगुणं शस्तं किर्म्मानी वातकर्षणम् ॥
संग्राहि पाचनं रुच्यं पक्काशयबलाऽऽवहम् ॥ ९४७ ॥
सिर्काऽनुपीतः क्षोदोऽस्य हंति मृत्स्नाऽऽशवासनाम् ॥
पट्ना चर्वितं लालास्रावं संशोषयत्यपि ॥ ९४८ ॥
निष्पीड्य रदनैः सम्यग्वाससातो रसोंजनात् ॥
नाखूना नामकं नेत्रामयं हन्यादसंशयम् ॥ ९४९ ॥
शूलाऽजीर्णस्य विद्वेषि कतीरा विकतेरारिः ॥
मुहल्लिल मुग्गश्शी च मुफत्तिह मुलत्तिफ ॥ ९५० ॥
हाविस् मुदम्मिल ख्याता शक्तिः षोढा ६ विचक्षणैः॥९५१॥
यवानी बद्ल ख्याता तुख्मकर्नब वा पुनः ॥
किर्म्मानी फारसी शामी निंती ४ जात्या चतुर्विधा॥९५२॥

कुंदुरु—लुबान ।

रूक्षोष्णस्त्रिगुणं मेध्यः पक्काशयबलप्रदः ॥
वांत्यसंज्ञां तथोत्क्लेदं प्रभंजनबलं जयेत् ॥ १५३ ॥
अक्षिक्षतं च हृद्रोगं क्षतजष्ठीवनं तथा ॥
नावनाच्च शिरःपीडां क्षेपणादस्रविस्रवम् ॥ १५४ ॥

काबिज् मुखद्दिर मुदस्मिल हम् मुगशी
रक्तस्य द्वाविस तथा मचुगे मुकव्वी ॥
उन्नाब दर्पहरणं बदल प्रणीतं
बह्मन् युगं २ किल भवेदथ मस्तगी वा ॥ १५५ ॥

कुडश—बेखमाजुरी ।

अंतः सितो बहिः श्यामो ह्यारिद्रोऽपि स उत्तमः ॥
त्रिधा रूक्षश्चतुर्द्धोष्णो गरलानवमो गुणैः ॥ १५६ ॥
लेपात्कुष्ठहरो रेकाद्दोषसंघातखंडनः ॥
फुप्फुसस्याऽहितोऽत्यंतं कतीरा दर्पनाशनः ॥ १५७ ॥
मुकर्रह् मुक्कयी शक्ति मुंअत्तिस इति त्रिधा ॥
जोज़्क्कय पिप्पली वाऽपि बदल् मात्रा यथाहितम् ॥१५८॥

टीका—अतसय छिक्का तद्विधायिनी शक्तिरिति ॥

कहरुवा—निर्य्यासविशेषः ।

रूमी प्रशस्तोऽरुणपीतवर्णः शीतश्चरूक्षो द्विगुणं मुकव्वी ॥
हृद्रोगहृद्वांत्यसृजाऽतिसारमुरःक्षतं तत्क्षणमेव हन्यात् ॥१५९॥
मुजफ्फिफ मुफर्रह् दिल् काबिज् तिस्र ३ श्च शक्तयः ॥
आबी—रसः स्याद्दर्पघ्नो बदल प्रतिपादितः ॥ १६० ॥
सिंदरूस तवाशीर तीनरूमी यथाप्दम् ॥ १६१ ॥

इति द्वाविंशतितमो वर्गः २२.

# अथ वर्गस्त्रयोविंशतितमः २३।

## रदीफ-लाम् ।

### लादन-अंबरभेदः ।

रूक्षोष्णमेकगुणितं जरायूणां विकर्षणम् ॥
धूपेन सूतिकातंकं हंति वातगदानपि ॥ ९६२ ॥
मर्दनादंगजां पीडां हंति संपद्यथाऽऽपदम् ॥ ९६३ ॥
संदल् गुलाब दर्पघ्नौ बदल् मांसी समीरिता ॥ ९६४ ॥
नीम मिस्काल-मानेन मात्रा वैद्यैः प्रकीर्तिता ॥
हारिद्रवर्णं सुरभि प्रशस्तं कामदीपनम् ॥ ९६५ ॥

### लाजवर्द ।

लाजवर्द इति विश्रुतो मणी रूक्षशीतलविपर्ययौ द्विधा ।
रेकतः सकलदोषसंचयं श्वासकासदमनश्च शूलजित् ॥ ९६६ ॥
कामिनीमदनमंदिराऽऽश्रितो यामिनी समयसाधितो द्रुतम् ॥
दुष्टमार्तवमपास्य देहतः पुंसवं सपदि संप्रयच्छति ॥ ९६७ ॥
उन्मादचित्तविक्षेपशमनं कुष्ठनाशनम् ॥
सिर्का-युक्तप्रलेपेन दर्पघ्नी मस्तगी स्मृता ॥ ९६८ ॥
दिरमे १ मानमाख्यातं बेबदल् पारिभाषितम् ॥ ९६९ ॥

### लबलाब-इश्कपेचां ।

रूक्षोष्णं द्विगुणं शक्तिर्मुहल्लिल मुलय्यन ॥
सोखे सफ्रा विरेकाऽर्थं स्वरसं सी ३ दिरम् पिबेत् ॥९७०॥
नवात-सहितं प्रातः सुकुमाराऽर्हमौषधम् ॥
मुहल्लिल् हरितः श्रेष्ठ स्तमर्हिंदी सितोपलः ॥
दर्पघ्नौ बदल ज्ञेयौ खत्मी शाहतरा पुनः ॥ ९७१ ॥

### लबन्-शीर । क्षीरम् ।

सामान्यतस्तु स्निग्धोष्णमेकधा पक्वमीरितम् ॥
अपक्वं शिशिरं स्निग्धं तथैव दवथुं हरेत् ॥ ९७२

वमथुं कश्मलं हिक्कां परं संतर्पणं हितम् ॥
बालवृद्धयुवक्षीणवर्ष्मणां धातुपुष्टिदम् ॥ १७३ ॥

लबनुल्लिसा-शीर औरत। स्त्रीदुग्धम्।

लेपादंजनतो नेत्र्यं नावनाच्छीर्षरूक्षताम् ॥
अह्बल्-रोगहरं सद्यः सिंचनादमृतोपमम् ॥ १७४ ॥

टीका-एकवस्तुनो द्विधाऽवलोकनात् अहबल्-नामाऽऽमयः ॥

लबनुल्बकर-शीरमादे गाव। गोक्षीरम्।

पौष्टिकं बृंहणं वृष्यं हृद्रोगगरलाऽपहम् ॥
वान्तिप्रशमनं जीर्णज्वरयक्ष्मविपक्षकम् ॥ १७५ ॥

लबनुल्गुनम्-शीरबुज। अजापयः।

नज्ला-निरासदक्षं स्याज्ज्वरश्वासाऽतिसारजित् ॥
रक्तपित्तप्रशमनं बदल् गोक्षीरमीरितम् ॥ १७६ ॥

लबनुल्इबलः-शीर मादे शुतर। करभीदुग्धम्।

सुद्दे कुशा स-मस्तंगी इस्तिस्का प्लीहशोथहृत् ॥
दुर्नामक्रिमिवातोत्थव्याधिं श्लेष्माणमुल्बणम् ॥
आनाहं जरयत्याशु कुम्भयोनिरिवेल्वलम् ॥ १७७ ॥

लबनुलखयल-शीर अस्प मादा। वडवाक्षीरम्।

मुदिर्र मुसहिल् शाखावातघ्नं कोष्ठशुद्धिकृत् ॥
नितान्तपुष्टिजननं रजसः संप्रवर्तनम् ॥ १७८ ॥

लबनुलजान्, शीरे मेष। आविकं पयः।

नज्फुलदम् सिल्ल-रोगघ्नं जीर्णज्वरकफाऽपहृत् ॥
दीपनं पंचबाणस्य भग्नवातनिषूदनम् ॥ १७९ ॥

टीका-सिल्ल-फुप्फुसस्य क्षतम् ॥

लबनुल् अतां-शीर खर मादा। रासभीक्षीरम्।

यक्ष्मघ्नं रासभीक्षीरं स्रोतःसंशोधनं लघु ॥
अशीतं श्लेष्मवातघ्नं कासश्वासनिकृन्तनम् ॥ १८० ॥

लबनुलफील मादा-करेणुक्षीरम्।

वियतेऽवयवस्थैर्यं वयःसंस्थापनं परम् ॥

अतिद्रविणदं स्थौल्यकरं करणदीपनम् ॥ ९८१ ॥

लबनुल्गावमेष । महिषीपयः ।

हिरण्यरेतसं क्षाममक्षामं तनुते ध्रुवम् ॥
क्षुधुष्णां च पिपासां च श्रीलाभो भोगभामिव ॥ ९८२ ॥

लबन्-हामिजं-जुगरात । दधि ।

शीतं रूक्षमसर्पिर्यत्प्रशस्तं साज्यमीरितम् ॥
त्रिगुणं पीनसश्लेष्मकासश्वासज्वरप्रदम् ॥ ९८३ ॥
वर्षाशरद्वसंतेषु रजन्यां प्रचुरं तथा ॥
प्राशितं कुष्ठजननं रक्तातीसारनाशनम् ॥ ९८४ ॥
असल् व नूमाष सिताऽऽज्यधात्रीफलं च दर्प्पाऽपहृतिप्रवीणम् ॥
प्रायो न सेव्यं श्वयथुं जुमाम-प्रदं तथाऽवृष्यमुदीरितं च॥९८५॥

लिसानुलहमल-बरगबारतंक ।

रूक्षं शीतं द्विगुणितं काबिज् हाबिस् मुदम्मिल ॥
मात्रा मिस्काल दर्पघ्ने वनफ्शा मस्तगी पुनः ॥ ९८६ ॥
बरग् हुमाज बुस्तानी बदल् वैद्यैः प्रकीर्तिताः ॥
गाफित्-पत्रस्य चूर्णेनाऽमुष्य पत्रं विचूर्णितम् ॥ ९८७ ॥
वह्निप्लुष्टे विनिक्षिप्तं सद्यो निर्वापणं भवेत् ॥ ९८८ ॥

लिसानुलसोर-गावजबां-काहूजबां । गोजिह्वा ।

खूब शामी खुरासानी गीलानी बिंदुभिश्चिता ॥
स्निग्धोष्णा द्विगुणं बल्या सौदा हृद्रोगनाशिनी ॥ ९८९ ॥
मुफर्रह मुकव्वी दिल् दर्पघ्नं शोणचंदनम् ॥
वृक्षाम्लं भस्मकौशेयबीजपूरफलत्वचः ॥ ९९० ॥
पथ्या मुरब्बा च तथा कासनीति भिषङ्मते ॥ ९९१ ॥

लिसानुल् असाफीर-कुंजश्कजबां । इंद्रयवः ।

द्विधो रूक्षोष्ण उदितः काबिज् हाबिस शक्तिमान् ॥
शस्तो दीर्घतमस्त्विक्तो हारिचंदनवर्णयुक् ॥ ९९२ ॥

मुबही दर्पहा कदू बदल जोज अथाऽपि च ॥
तूदरी सुर्ख किंवा स्यात् बहमनऽहमर एव वा ॥ ९९३ ॥

लुक्-लाक्षा । लाख ।

रूक्षोष्णैकगुणं शस्ता कुंजराऽशनवृक्षजा ॥
क्षालिता विधिना मात्रा दिरमे १ संस्मृता बुधैः ॥ ९९४ ॥
सिर्काऽनुपीता देहस्थ लेखनी विधिनाऽमुना ॥
संप्रक्षाल्य भिषग्वर्यः सर्वकार्येषु योजयेत् ॥ ९९५ ॥
अजूबर् रेवंदचीनी च द्वयोः क्वाथे विमर्दिता ॥
अधः स्थिता च संग्राह्या सर्वयोगक्षमा भवेत् ॥ ९९६ ॥
दर्पघ्नी मस्तगी ख्याता असारून बदल तथा ॥
रेवंदचीनी संप्रोक्ता कुशलैर्भिषजां वरैः ॥ ९९७ ॥
शक्तिर्द्वंद्व २ मुरु ख्यातं मुफत्तिह मुजप्फिफ ॥ ९९८ ॥

लोजहुल्व, बादामशीरीं ।

समश्चतुर्थोऽशीतश्च किंचिज्जीवोष्मवर्द्धनः ॥
पौष्टिको बृंहणो वृष्यः कासाऽस्रष्ठीवनं जयेत् ॥ ९९९ ॥
उष्णवातं विबंधं च शुक्राऽर्णवसुधाकरः ॥
मात्रा यथाबलं पूर्णा पुष्पचापेषुदीपनः ॥ १००० ॥
सूक्ष्मत्वगुत्तमः श्रेयान्मीनमज्जासितेतरः ॥
दर्पघ्नी शर्करा चाऽस्य चिलगोजा बदल स्मृतः ॥ १००१ ॥

टीका—हार रतव बदर्जे दुयम् ॥

लोज, मुर, बादाम तलख । तिक्तः ।

रूक्षोष्णस्त्रिगुणं लेपाद्व्यंग्यसिध्मविखंडनः ॥
कर्णशूलहरं कर्णपूरणात् रोगन स्मृतम् ॥ १००२ ॥
सुदेकुशा मुदिर स्यान्मूत्रकृच्छ्राऽश्मरीप्रणुत् ॥
अन्त्राऽहितश्च दर्पघ्नः शीरीं बादाम कीर्तितः ॥ १००३ ॥

टीका—बदल फिन्दक ।

लह्वतुतीस–शिरीषः । सिरस ।

रूक्षाऽनुष्णो द्विधा शस्तो हरिद्रार्द्रो नवच्छदः ॥
शक्तिः काबिज मात्राऽस्य मिस्काल १ दिरमेऽथवा १००४॥
राजयानाऽजमोदा च दर्पघ्नमुभयं स्मृतम् ॥
गुलनार तवाशीर वतम् बदल विश्रुताः ॥ १००५ ॥

टीका—तरासीस हम् बदल स्तः ॥

लल् मुर्वारीद–मुक्ता । मोती ।

द्विगुणं शीतलं रूक्षं नफतुल्दम्–निबर्हणम् ॥
अक्षिक्षतसमुद्दिष्टमंजनान्मर्दितं च सत् ॥ १००६ ॥
अथाऽस्य मर्दनविधिर्निम्बुकद्रवभावितम् ॥
ततः पेश्यां विनिक्षिप्य मर्दयेत्करलाघवात् ॥ १००७ ॥
नवनीतनिभं सारं सेव्यमातंकशान्तये ॥
माषोन्मितं सितायुक्तं गुलकन्द–समं तथा ॥ १००८ ॥
मुरब्बाऽऽमलकाऽऽख्येन प्रातः प्रातरदेन्नरः ॥
वेदमुश्क अरक् काहजबां कासूनी–भवेन वा ॥ १००९ ॥
अनुपीतं तु यक्ष्माणं सोपसर्गं नियच्छति ॥
प्रशस्तमूर्जनं पुष्टं मिष्टवारिरसोपमम् ॥ १०१० ॥
मुलत्तिफ मुकव्वी दिल् द्विधाशक्तिसमेधितम् ॥
शीरमाजूनगुल्–युग्मं दर्पघ्नं वैद्यकल्पितम् ॥ १०११ ॥
बदल् सदफ खत्मी वा बनफ्शा च क्रमाद्विदुः ॥ १०१२ ॥

लीमू–निंबुकम् । नीबू ।

रूक्षोष्णतीक्ष्णं छदनं तथा त्वगाभ्यन्तरं यच्छिशिरं च रूक्षम् ॥
द्विधा प्रभावे फलपूरतुल्यं क्षौद्रं पटुर्दर्पहरं वदंति ॥ १०१३ ॥
प्रशस्तं कागजी पीतं बदल् गुह्णाल ईरितः ॥
दीपनं पाचनं रुच्यं शूलमूलनिकृन्तनम् ॥ १०१४ ॥

इति त्रयोविंशतितमो वर्गः २३.

# अथ वर्गश्चतुर्विंशतितमः २४.

## रदीफ मीम ।

### माय-आब । नीरम् ।

दिव्यं भौमं द्विधा वारि तत्र पूर्वं त्रिधा स्मृतम् ॥
धारं कारकतौषारे भौमं सप्तविधं मतम् ॥ १०१५ ॥
नादेयकौपताडागचौंडयनैर्झरपाल्वलम् ॥
कैदारं च समस्तेषु नादेयं प्रवरं भवेत् ॥ १०१६ ॥
तत्राऽपि यामुनं गांगं प्रशस्तमुभयं गणे ॥
पुण्यं दोषहरं स्वास्थ्यमस्वास्थ्येऽपि सुधासमम् ॥ १०१७ ॥
स्वादु पाके रसे शीतं त्रिदोषशमनं लघु ॥
पवित्रमपि पथ्यं च गांगं वारि मनोहरम् ॥ १०१८ ॥
तस्मात्किंचिद्गुरु स्वादु रक्तपित्ताऽपहं परम् ॥
वातघ्नं वह्निजननं तीक्ष्णं च यमुनोदकम् ॥ १०१९ ॥
चतुर्द्धा ४ शिशिरं स्निग्धं गुरुपाके च पाचनम् ॥
पेयमल्पं हितं प्राज्यम् इस्तिस्का-प्लीहवृद्धिकृत ॥ १०२० ॥
उष्णांभः पीनसश्वासकासश्लेष्मगलाऽऽमयान् ॥
शूलवाताऽऽमयप्लीहगुल्माऽजीर्णविषूचिकाः ॥ १०२१ ॥
मन्दाग्निशोथहिक्काश्च ज्वरं शीतं नियच्छति ॥
शीतं वारि मदं मूर्छां ग्लानिं छार्दं श्रमं क्लमम् ॥ १०२२ ॥
भ्रमं तृषं रक्तपित्तं दाहं चाऽपि व्यपोहति ॥ १०२३ ॥
सुवर्णदुर्वणसिताभिरम्भोनिर्वापितं दोषहरं त्रिदोषे ॥
पथ्यं च लोहेन तथैव सात्म्यमाप्यायनं लंघनकर्मणि स्यात् १०२४

### मायुल्लहम्-मांसरसः ।

रुचिकृद्बृंहणो वृष्यो दीपनस्तद्गुणोत्तरः ॥
कुष्ठिने न हितः सर्व आजो यक्ष्मवते हितः ॥ १०२५ ॥

माउल्वर्द। गुलाब।

द्विगुणं स्निग्धशीतः स्याद्दाहं मूर्छां तृषं क्लमम् ॥
मुदिर्र १ मुलय्यपन स्यातां शक्ती २ मूत्ररुजं जयेत्१०२६॥
मुकव्वी दिल् दमाग स्यान्नेत्रश्चांजनसेकतः ॥
लेपादाऽघ्राणतः पानाच्छीर्षशूलनिषूदनः ॥ १०२७ ॥
प्रस्वेदः शतपुष्पाया गुलाब-सममानयुक् ॥
कोष्णो निपीतः शूलघ्नो हैजा-दोषविकर्षणः ॥ १०२८ ॥

टीका-हैजा-विषूचिका ॥

माउल् असल्। क्षौद्रांऽभः।

रूक्षोष्णमेकगुणितं लेखनं बलकर्षणम् ॥
मेदोघ्नं कार्श्यकृद्दुष्टशोणितस्य विशोधनम् ॥ १०२९ ॥

मुखलिसा। तृणविशेषः।

तिर्याक-सदृशं शक्त्या प्रकृत्या च समं स्मृतम् ॥
वत्सरं दिरमे २ भुक्तं युक्तं गव्येन सर्पिषा ॥ १०३० ॥
विषादुभयतो वर्षं परं पाति सुदारुणात् ॥ १०३१ ॥

टीका-तिर्य्याक-जहरमोहरा ॥

मंजीजोश, मंजीघोश-मरुवक।

रूक्षोष्णो द्विगुणं मादा दिल्-दमाग-बलप्रदः ॥
कलादार्ढ्यकरः प्राज्योवस्तिकोशविकारकृत् ॥ १०३२ ॥
मुफत्तिह मुहल्लिल् च मुदिर्र मुबही तथा ॥
चतस्रः ४ शक्तयः ख्याता दर्पघ्नी लोणिका भवेत् ॥ १०३३ ॥
लुआब अस्पगोल स्यात्पुनर्मात्रा दिरम् २ युगम् ॥१०३४॥

मिज-माषः।

स्निग्धो द्विधैकधा चोष्णः प्रशस्तो निस्तुषो हितः ॥
आध्मानकृत्तृषाऽक्रांतः शूलाऽजीर्णकरो भृशम् ॥ १०३५ ॥
माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ॥
गुरुः समीरहा स्वादुः शुक्रवृद्धिविरेककृत ॥ १०३६ ॥

श्वासकासहरः प्राज्यश्वास्य बादाम दर्पहृत् १०३७ ॥

मिरजान-बुसुद । विद्रुमम् ।

टीका-बे वर्गे प्रागुक्तमेव ॥

मामीरान ।

रूक्षोष्णो द्विगुणं श्वैत्यचक्षुःपुष्पांध्यदोषहृत ॥
जटाकषायः सपदि कामलां हंति वेगतः ॥ १०३८ ॥
सुजह्नी च मुकव्वी च शक्की उद्दामविक्रमे ॥
दर्पघ्नः स्यात् तवाशीर मात्रा नीमदिरम्-मिता ॥ १०३९ ॥

मुर्र-मकद्र-बोल ।

तिक्तोग्रगंधः प्रवरस्त्रिधोष्णो रूक्षः प्रसूताऽऽमयखंडनःस्यात ॥
मने अफ़ूनत् तनुते मुहल्लिल् शक्त्या मुफत्तिह् गुणवांश्च शोणः १०४०

टीका-मने अफूनत्-दोषप्रकोपनिषेधः ।

कलमः स्वरसे पिष्टः प्रलेपादामशोथहृत ॥
सुदाव स्वरसक्काथोपार्जितो ह्याशु वस्तिना ॥ १०४१ ॥

टीका-कर्मविशेषणेति ॥

रजःस्तम्भं मृतभ्रूणं संमोचयति कोष्ठतः ॥ १०४२ ॥
गुंजामानोन्मितः प्रातः कोष्णनीराऽनुपानतः ॥ १०४३ ॥
श्वासं कासं पार्श्वशूलं वक्षःकण्ठरुजं जयेत् ॥
सिर्का-रोगनगुल्-युक्तः प्रलेपादपि मर्दनात ॥ १०४४ ॥
पामाकण्डूप्रशमनो वस्तिकोष्ठाऽहितो भृशम् ॥
क्षौद्रं काफूर दर्पघ्ने सिर्का बदल उच्यते ॥ १०४५ ॥

मुर्दारसंग ।

अस्फहानि वरः शीतो दीप्तिमान्पाटलो गुणे ॥
रूक्षो द्विधा प्रलेपेन व्रणवीसर्पकुष्ठनुत् ॥ १०४६ ॥
असृग्दरं रक्तपित्तं रक्ताऽतिसरणं पुनः ॥
रक्तनिष्ठीवनं मेहं वस्तिदाहं नियच्छति ॥ १०४७ ॥

मिस्काल १ एकस्तिलतैलयुक्तः
प्रातः क्रिमिघ्नो विधिनाऽशितः स्यात् ॥
धारोष्णदुग्धं ससितं भिषग्भिर्दर्पोऽपहं प्रोक्तममुष्य सद्भिः ॥ १०४८ ॥

टीका—अक्लीमिय—प्रतिनिधिः ॥

मुरी—आबकामा । काँजिकम् ।

रूक्षोष्णं द्विगुणं पार्श्वकटिपृष्ठोरुशूलनुत् ॥
पाचनं श्वविषध्वंसि यत मुजफ्फिफ—शक्तियुक् ॥ १०४९ ॥
मुलत्तिफ मुजल्ली च सर्पिर्दर्पघ्नमीरितम् ॥
आहियाना बदल् ख्यातो मात्रा ज्ञेया यथेप्सितम् ॥ १०५० ॥

मुश्क—मृगमदः ।

श्वासकासहृदयार्तिहारिणी चित्तविभ्रममदप्रमाथिनी ॥
वीर्य्यशौर्यबलवृद्धिकारिणी पुष्पचापरतिरंगदायिनी ॥ १०५१ ॥
श्लेष्मवातजठराऽग्निमन्दतां हन्ति रूक्षशिशिरेतरा त्रिधा ॥
जाफ दिल् शिशिरताविसंज्ञतास्वेदगंधशमनी निशातदा १०५२ ॥

टीका—प्रमोदप्रदेत्यर्थः ॥

श्रीखण्डं च तवाशीर दर्पघ्नमुभयं स्मृतम् ॥
बदल वर विख्यातं मात्रा स्याद्रक्तिकाद्वयम् ॥ १०५३ ॥

मिशमिश—खुमानी ।

स्निग्धा शीता द्विधा स्वादुः पक्का शस्ता तृषाऽपहा ॥
सफ्रा विरेचनी बल्या रेतोमदनवर्द्धिनी ॥ १०५४ ॥
दवथुं वमथुं हिक्कां श्वासं पित्तज्वरं हरेत् ॥
भ्रमं मूर्छां मदं रक्तपित्तं प्रदरमेव च ॥ १०५५ ॥
अस्या मग्ज—भवः स्नेहः साष्टिः पिष्टः प्रलेपनात् ॥
कुठार इव शालानां संभवेत्खंडनोऽर्शसाम् ॥ १०५६ ॥
कफे मात्रा समुद्दिष्टा दर्पघ्नी स्यात् शिकञ्जवीं ॥
पक्वो बदल शफ्तालू तथा—ऽऽलू संप्रकीर्तितः ॥ १०५७ ॥

मस्तगी रूमी–मस्तंगी ।

रूक्षोष्णा द्विगुणं मादा यकृतायंत्रशोथहृत् ॥
नफ़ुतुल्दम्–कफकासघ्नी सुदाय–घ्नी च दीपिनी ॥ १०५८॥
समगऽवी विकारघ्नः पाचनी दिरमे १ खुराक् ॥
मुलत्तिफ़ मुकव्वी च मुहल्लिल् काबिज स्मृताः ॥ १०५९॥
ह्राविस् दम् शक्कयस्तुर्य्या ४ अनुकल्पस्तु कुन्दुरुः ॥ १०६० ॥

मुकुल, अर्जक–महिषाऽक्षो गुग्गुलुः ।

स्निग्धोष्णो द्विगुणं सूक्ष्मः सौदा–( श्लेष्म ) दोषविरेककृत् ॥
पवनाऽऽमयविध्वंसी प्रलेपाद्व्रणशोथहृत् ॥ १०६१ ॥
मूत्रकृच्छ्राऽश्मरीघ्नश्च मुदिर्र मुबही तथा ॥
कुष्ठोरुस्तंभदुर्नामनाशनो धूपनाऽशनात् ॥ १०६२ ॥
कतीरा दर्पहन्मात्रा दिरम १ प्रवरा भवेत् ॥ १०६३ ॥

मिलह–नमक । लवणम् ।

वाक्यम्–नमक ताम १, नमक इन्दरानी २, नमक तव-रजद याने नमक संग लाहोरी इति भाषायाम् ३, नमक स्याह ४, नमक नुक्ती ५,

इति पंच ५ विधं ख्यातं लवणं भिषगुत्तमैः ॥ १०६४ ॥
उष्णं रूक्षं द्विधा चामशूलगुल्मनिकृंतनम् ॥
श्लेष्मघ्नं रेकवांतिभ्यां पाचनं पवनस्य च ॥ १०६५ ॥
इंदरानी नमक् श्रेष्ठमंजनेभः बयाज–नुत ॥
नाखूना सवल–ध्वंसकरं सूक्ष्ममजीर्णजित् ॥ १०६६ ॥
मने अफ़ूनत् तनुते जुजाम खारिश् तथा निक्रिस हंति कूबा ॥
मात्रा यथायोग्यमुदीरिता च दर्पाऽपहा हैमवती स्मृताऽस्य॥१०६७॥

टीका–हैमवती–शिवा ॥

मुहल्लिल मुजल्ली च मुकयी शक्कयः स्मृताः ॥
गदिता बदल क्षारा–मज्जानो दर्पहारिणः ॥ १०६८ ॥

मुबज-कद्लीफलम्।

शस्तं महत्स्वादुरसं सुपक्वं शीतं त्रिधा स्निग्धमपि त्रिधा स्यात्॥
श्लेष्माकरः पित्तनिरासकश्च दाहं तृषं चाऽपि हिनस्ति सद्यः१०६९
दर्पघ्नं मस्तगी क्षौद्रं बद्ल् हैयंगवीनकम्॥
मुरक्तिब मुलय्यन् च प्रौढं शक्तियुगं स्मृतम्॥ १०७०॥

मोमियार्यी[1]।

प्रशस्ताऽऽकरसंजाता ग्रावनिर्झरधामतः॥
रूक्षोष्णैकगुणं भुक्ता भग्नाऽऽघातविघातकृत्॥ १०७१॥
खलय् कसर जबैंरा सक्ता फालिज् सरय् तथा॥
लक्वा शकीका द्व्वार तमद्दुद् खद्र १ पुनः॥१०७२॥
सुदाय बल्गमी शोथं व्यापादयति कृत्स्नशः॥
मर्जंगोश-रसे पिष्टा नावनान्मुखरोगहृत्॥ १०७३॥
यवक्काथाऽनुपीता च नफ्तुल्दम् हृदयाऽऽमयम्॥
हिक्कां पंच ५ विधां सद्यो निहन्यात्कंठनिग्रहम्॥ १०७४॥
धारोष्णपयसा साकं शर्करामश्मरीं जयेत्॥
मात्रा रुब ४ दिरम् प्रोक्ता जख्म गुर्दा-निबर्हिणी १०७५॥

टीका-दिरम् तुरीयांश इत्यर्थः। खलय-कीकसस्य स्थानाद्भ्रंशः। कसर-अस्थिभंगः। जर्बा-अस्थिवेदना। सक्ता-सन्यासः। फालिज-पक्षनाशः। सरय-अपस्मृतिः। लक्वा-अर्दितम्। शकीका-अर्धावभेदकः। द्व्वार-सूर्यावर्त्तः। तमद्दुद-शोथाऽभावेऽपि शोथसादृश्यम्, फूलना बदनका-इति भाषायाम्। खद्र-शैथिल्यम्। सुदाय-साधारणशीर्षवेदना, कफं श्वयथुं च व्यापादयतीत्यन्वयः॥

इति चतुर्विंशतितमो वर्गः २४.

---

[1] मिमाई इति भाषायाम्।

# अथ वर्गः पञ्चविंशतितमः २५.

## रदीफ़ नून ।

### नारजील-श्रीफलम् ।

**टीका**-तद्गुणाः पूर्वमेव जीम-वर्गे निगदिताः ॥

किंच-

तक़ीरुल्बोल-शमनं वृक्कोष्मजननं सरम् ॥
दुर्नामदलनं सेव्यं भवेत्क्लीवत्वखंडनम् ॥ १०७६ ॥

### नारंज-ऐरावतफलम् । नारंगी ।

त्वगुष्णा द्विगुणं रूक्षा चाऽम्लत्वं शिशिरं तथा ॥
रूक्षं चैकगुणं बीजं शिफा वैद्यैः प्रकीर्तिता ॥ १०७७ ॥
शक्तिस्त्वचो मुलत्तिफ़् च मुक़व्वी हृत्सरोरुहः ॥
प्रभावोंतर्भुवोऽम्लस्य रक्तपित्तप्रतर्पणः ॥ १०७८ ॥
उदन्याशमनः सूनबाणोत्तेजनवर्द्धनः ॥
त्वचश्चूर्णं द्वि २० मिस्क़ाल-मितं कोष्णेन वारिणा १०७९॥
शूलं पक्वाशयोत्पन्नमामरेकं रयति द्रुतम् ॥
खुर्मा क्षौद्रं च दर्पघ्नं तुरंज बदल स्मृतः ॥ १०८० ॥

### नसरीन-वर्द्दचीनी-सेवती ।

रूक्षोष्णा त्रिगुणं धातुशिराशैत्याऽपकर्षिणी ॥
दवीं तनीन-हिक्काघ्नी जुगुप्सावांतिनाशिनी ॥ १०८१ ॥
दर्पघ्नोऽस्याः सुधारश्मिः बदल् नर्गस यासमोन् ॥
मुक़व्वी उत्तमांगस्य मात्रा स्याद्दिरम ३ त्रयम् ॥ १०८२ ॥

**टीका**-दवीं तनीन-श्रवणयोर्व्यक्ताऽव्यक्तो नादः ॥

### नानख्वाह-खुर्द्दाना । यवानी ।

रूक्षोष्णा त्रिगुणं कासश्वासशूलामपाचनी ॥
ज्वरघ्नी रेचनी मूत्राघातवाताऽनुलोमनी ॥ १०८३ ॥

---

१ कामदेव इत्यर्थः ।

क्रिमिमंदाऽनलाऽजीर्णकफहिक्कानिकृंतनी ॥
सिर्का–गुडप्रलेपेन विस्फोटग्रंथिनाशिनी ॥ १०८४ ॥
मुदिर् मुलय्यन प्रोक्ता मुमुसिक् मुस्किन शक्तयः ॥
बजर्कतूना दर्पघ्नोऽजमोदा बदल स्मृता ॥ १०८५ ॥

नारमुष्क–पुन्नागः । नागकेसर ।

रूक्षोष्णो द्विगुणं ग्राही रक्तदुर्नामनाशनः ॥
मुलत्तिफ मुकव्वी दिल् प्रशस्तः सुरभिर्नवः ॥ १०८६ ॥
मात्रा नीम दिरम् प्रोक्ता दिरमे १ गदिताऽपरा ॥
दर्पाऽपहं तवाशीर बदल् सुंबल जंजबील् ॥ १०८७ ॥
शाणाऽर्द्धं नारमुश्क स्यात् नवातऽपि तथैव च ॥
नवनीतेनाऽनुपीतं शोणिताऽर्शोनिवर्हणम् ॥ १०८८ ॥

नरगस ।

रूक्षोष्णो द्विगुणं शक्तिर्मुहल्लिल उदाहृता ॥
स्यान् नीलोफर दर्पघ्नं नस्रीन बदल स्मृतः ॥ १०८९ ॥

नीलोफर–इंदीवरं[1] ।

स्निग्धं शीतं द्विधा कासं हिक्कातमकपित्तहृत ॥
रक्तकोपज्वरं दाहं पिपासां विलयं नयेत् ॥ १०९० ॥
शक्तयश्चाऽत्र निर्णीता मुकव्वी दिल मुमुसिक ॥
मुनव्विम् मुबही चाऽपि दर्पघ्नः स्यात्सितोपलः ॥ १०९१ ॥
बदल् बनफशा खत्मी च खुराक दिरम २ द्वयम् ॥
शिरःशूलहरं बल्यं इहूतलाम–निबंधनम् ॥ १०९२ ॥

टीका–इह्तलाम–स्वप्ने रेतःस्खलनम् ॥

शर्बत्खश्खाश–संमिश्रं वाह अंगेज[2] संभवेत ॥
शुक्रसंवर्द्धनं चापि प्रमेहान्विंशतिं जयेत् ॥ १०९३ ॥

नायनाय–पोदीना गुलशेनी ।

रूक्षोष्णस्त्रिगुणं सिर्का–युक्तो नफ़्तुद्दम प्रणुत् ॥

---

१ तदभावे कुमुदं प्रसिन्दम् । २ याने बागी ।

क्रिमिघ्नश्चाऽपि निर्दिष्टो दिरमे १ मानमीरितम् ॥ १०९४ ॥
अम्लद्रवेण हिक्कातृड्विषूचीदोषकर्षणः ॥
यवपिष्टयुतो लेपाच्छिरोऽर्त्तिस्तनशोथहृत् ॥ १०९५ ॥

**टीका**–हिक्का फवाक । तृषा अतश, तिश्नगी । विषूचिका–हैजा ॥

लवणेन युवो लेपात्सारमेयविषाऽपहः ॥
मस्तगी–मधुसंयुक्तः क्षुत्करः शीतवारिणा ॥
हिक्का वांतिं च हृद्रोगं शमयेत्तत्क्षणात्किल ॥ १०९६ ॥
करफस दर्पहा शिफ्त बदल् अस्य प्रकीर्तितः ॥ १०९७ ॥
ललनास्मरमंदिरे निशि प्रथमं मैथुनतो रहो निदध्यात् ॥
न भवेत्किल गर्भसंभवः सुरतेच्छादलनः कदाचन ॥ १०९८ ॥

नील रंजनी–लील ।

सारोऽस्या नीलवर्णः स्यात्पत्रं वस्मा समीरितम् ॥
रूक्षाऽनुष्णा द्विधा लेपात्कुष्ठसिध्मविखंडनः ॥ १०९९ ॥

**टीका**–विसर्पहारी च ॥

दायुः–सालिब रोगी च संप्लुष्टश्चित्रभानुना ॥
शमेति सिर्का–लेपेन ग्रंथिशीर्षव्रणेष्वपि ॥ ११०० ॥
खूब हिंदी मुजफ्फिफ् च शक्तिः काबिज दर्पहृत् ॥
रुब्बसूस बदल् युग्मं २ गुग्गुलुश्च कुचंदनम् ॥ ११०१ ॥

निशास्ता–गोधूमसत्त्वम् ।

द्विगुणं स्निग्धशीतः स्यादक्षिक्षतगदाऽपहः ॥
नवात रोगनूबादाम पक्वः कासस्वराऽर्तिजित् ॥ ११०२ ॥

नुमल मोरचा । सुर्खनेश । रक्तमुखी पिपीलिका ।

उष्णा रूक्षा त्रिधा तीक्ष्णा सूक्ष्मा नेत्रामयाऽपहा ॥
सिर्का–लेपेन कुष्ठघ्नी तथा रोमप्रहर्षिणी ॥ ११०३ ॥
दिरम् पंज ५ मिता धार्य्यातैले सोसन–संभवे ॥
सप्ताहं ७ पंक्तिशतकं १०० लिंगलेपात् नऊज–दाः॥११०४॥

नूरा आहक । सुधा । चूना ।

रूक्षोष्णस्त्रिगुणं तीक्ष्णो मुहरिक् मुस्किन् मुलत्तिफ ॥
नवनीतेन संलिप्तः सोख्तगी–दाहनाशनः ॥ ११०५ ॥
मुम्रिखन् अपि निर्दिष्टो मांसघ्नो मशकाऽपहः ॥
प्राज्यांत्रक्षतदाहार्तिमुखपाकं हृदि व्यथाम् ॥ ११०६ ॥
रक्ताऽतिसरणं मूत्रकृच्छ्रं क्षतसमुद्भवम् ॥
जीवोष्मशमनाच्छैत्यं तनुतेऽसाध्यतां पुनः ॥ ११०७ ॥
दर्पघ्नं शीरबादाम स्निग्धं तैलादतेऽखिलम् ॥
जर्नीख स्वार्जिकाक्षारो द्वयं बदल ईरितम् ॥ ११०८ ॥

नतरून, चूरा–इर्म्मनी । यवक्षारः ।

रूक्षोष्णस्त्रिगुणं शक्तिर्मुजल्ली श्वासकासजित् ॥
श्लेष्मगुल्माऽश्मरी–चोब मिन्शार सदृशक्रमः ॥ ११०९ ॥
मूलकस्वरसै तक्रे मिश्रितो मूत्रकृच्छ्रभित् ॥
समगऽर्बी तबाशीर कतीरा–दर्पकर्षणः ॥ १११० ॥
बदल् नमक् इन्दरानी क्षाराः प्रोक्तास्तथाऽपरे ॥ ११११ ॥

नवसादर ।

साफ् शश्फाफ बिल्लोर–संकाशं शस्तमेव वत् ॥
रूक्षोष्णं त्रिगुणं चक्षुःकुसुमाञ्जुनतां हरेत् ॥ १११२ ॥
दंदशूकादिदंशेषु निक्षिप्तं विषदोषहृत् ॥
ससुधं नावनं शीर्षशूलं सर्वं व्यपोहति ॥ १११३ ॥
सुप्रसन्न–खुरासानी मुजल्ली च मुलत्तिफ ॥
बदल शिव्वयमानी या इन्दरानी पटुर्भवेत् ॥ १११४ ॥

इति पंचविंशतितमो वर्गः २५.

१ चूनासहितः ।

# अथ वर्गः षड्विंशतितमः २६.

## रदीफ-वाव ।

### वज-वचा । खुरासानी ।

षड्ग्रंथा पीवरा शस्ता सुरभिर्विशदा लघुः ॥
रूक्षोष्णा त्रिगुणं वर्ण्या वाह अंगेज-वातनुत् ॥ १११५ ॥
गिरानी रसनायाश्च तशन्नुज गिरां गदम् ॥
पहूलू सीने जिगर् प्लीहपीडां हंत्यार्तवैरणी ॥ १११६ ॥
सन्निपातप्रशमनी सौदा बलगम-शोधनी ॥
मेध्या च दिरमे १ मात्रा सितच्छत्रा तु दर्पहृत् ॥ १११७ ॥
बदल कमून निर्दिष्टं जराविन्द च पौष्करम् ॥ १११८ ॥

### वखशनीजक । दिरमने खुरासानी ।

रूक्षोष्णो द्विगुणं हंति क्रिमीन्कोष्ठसमुद्भवान् ॥
मिस्काले १ गदिता मात्रा मुजूलक्-शक्तिः समीरिता १११९

### वर्द ।

टीका-साधारणपुष्पपर्य्यायः, तत्र विशेषात्-गुलाब गुलसुर्ख ॥

द्विगुणं शिशिरो रूक्षश्चतुरंगबलावहः ॥
दवथुं वमथुं ग्लानिं तृष्णां कश्मलमुत्कटम् ॥ ११२० ॥
नतम् अरक दुर्गंधं हिनस्ति स्मरदीपनः ॥ ११२१ ॥
मात्रा पञ्च ५ दिरम् पञ्चदश १५ वाऽथ गुणोत्तरा॥११२२॥
मुलय्यन् मुसहिल् शक्ती दर्पघ्ने मधुसर्पिषी ॥
बदल् बनफ्शा काफूर प्रतिश्यायरुजाऽपहः ॥ ११२३ ॥

### वरकुल्तुर्फा-वरगकज । झाऊके पत्र ।

रूक्षं शीतं द्विधा रक्तपित्ताऽतिसरणं जयेत् ॥
प्रदरं मूत्रकृच्छ्रं च हाबिस् काबिज शक्तियुक् ॥ ११२४ ॥
लेपेन प्लीहशोथघ्नं गंडूषो दंतदार्ढ्यकृत ॥ ११२५ ॥

### वरकुल्गुरव-वरगपाढ ।

रूक्षो शीतं द्विधा कासं गंडूषेण गलस्थिताम् ॥

रक्तपां बहिरानीय तनुते शर्म्म कुष्ठहृत ॥ ११२६ ॥

वरक़ुलसरो । वरगसरो ।

काबिज़् दंदान-पीडाघ्नं निसर्गात मातदिल् मतम् ॥११२७॥

वरक-इज्जास । वरग-आलू ।

गंडूषात्स्वरसो हंति कण्ठतालुगताऽऽमयान् ॥ ११२८ ॥

वरक् सिमसिम-वरग कुंजद । तिलपत्रम् ।

क्षालनात्स्वरसैर्दीर्घाश्चिकुरा मृदुमेचकाः ॥ ११२९ ॥

टीका-भवेयुरिति शेषः ॥

वरक-सोमन । वरग जंबक् ।

रेचनं दग्धपित्तस्य सौदा बलगम-दोषयोः ॥

अपस्मृतिशिरःशूल कीटदंशविषाऽपहम् ॥ ११३० ॥

वरदुल्लोज-गुल बादाम ।

स्निग्धं शीतं शिरोऽर्तिघ्नं बलवीर्यविवर्द्धनम् ॥ ११३१ ॥

वर्द सफर्जल । गुल बिही ।

स्निग्धं शीतं द्विधा रुच्यं दिल् दमाग-बलप्रदम् ॥ ११३२ ॥

वर्द तुफ्फाह-गुल सेव ।

मातदिल् गदितं शीर्षहृदोर्भृशबलावहम् ॥ ११३३ ॥

वर्द कुमसरी-गुल अमरूद ।

सेव-पुष्पसदृशं गुणोत्तरं शीर्षहृद्बलविवर्द्धनं सरम् ॥ ११३४ ॥

वरद-खश्खाश-गुल तिय्र्योक । फणिफेनपुष्पम् ।

निद्रानाशविनाशाय भवेदलिकलेपनात ॥ ११३५ ॥

इति षड्विंशतितमो वर्गः २६.

# अथ वर्गः सप्तविंशतितमः २७.

रदीफ-हे ।

हिंदवा । कासनी ।

टीका-बे = वर्गे पूर्वमुदिता ॥

हुलियाना-शाहतरा

टीका-शीन-वर्गे प्रागुक्त एव ॥

हलयून-मारचोब ।

टीका-नागदमनी-बीजाऽधिकारे प्रागदितैव ॥

हलेलय-अभया । अलिफ-वर्गे निरूपितैव ॥

इति सप्तविंशतितमो वर्गः २७.

## अथ वर्गोऽष्टाविंशतितमः २८.



### रदीफ ये ।

यास्मीन्-मालती । चंबेली ।

सुरभिर्विशदाऽपीता शस्ता श्रीरूपिणी वरा ॥
रूक्षोष्णा त्रिगुणं शीर्षशूलगौरवनाशिनी ॥ ११३६ ॥
रोगन्बादाम-कुसुमैरमुष्याः पुटवासितम् ॥
नावितं मर्दितं पादतलयोर्मस्तकाऽर्तिहृत् ॥ ११३७ ॥
मुलत्तिफ़ मुकव्वी च शीर्ष्णः स्याद्दर्पहा शशी ॥
बदल् नर्गस नस्रीन सोसन् जंबक् क्रमाद्विदुः ॥ ११३८॥

याना-उमा तसी । बीजवर्गे कथितैव ॥

याकूतः-याकन्द । पद्मरागः । लाल ।

रुस्मानी कथितः शस्तो रूक्षोऽनुष्णस्तथैकधा ॥
मुजफ्फ़िफ़ मुकव्वी दिल् दिमाग उभयोरपि ॥ ११३९ ॥
मात्रा गुंजा २ द्वयं पूर्णा हिरण्यं बदल स्मृतम् ॥
माजून-प्रभृतौ युक्तोऽनंगं सांगं तनोति हि ॥ ११४० ॥

यमनी-मणिः ।

शर्बती लहमी हब्शी त्रिधा ३ यम्नी मणिः स्मृतः ॥
नामवर्णोपयोगी स्याद्धर्म्यपातभयाऽपहः ॥ ११४१ ॥

यरना-हिना । माहिंदी । हे-वर्गे प्रागुक्तैव ।

मुफ्रिदात-सकलौषधीगणः कार्यकारणमतो निरूपितः ॥
यस्य योगरचनाबलैर्भिषग्योगवैरिनशनं समीहते ॥ ११४२ ॥

वाक्यम्-कारणं मुफ्रिदात कार्यं मुरक्किबात तदिदानीं निरूप्यते-

इति मुफ्रिदातविषयो द्वितीयः खंडः २.

---

१ हि वांछति इत्यपि पाठः ।

# अथ खण्डस्तृतीयः ३.

कादर् हकीम निखिलज्ञसमर्थशक्तिर्नानापदार्थरचनापरलब्धवर्णः ॥
यल्लीलया विजयते तनुते यदीया भैषज्यभूतिरनिशं शमलं नराणाम्॥ १॥

तरकीब दर्जे मुरक्किवात ।

वीर्य्यद्वयगुणद्वंद्वगणनं द्रव्यसंकरे ॥
साम्यात्समं विशेषात्तु तबिअत् सैति निर्णयः ॥ २ ॥
श्रुतिभक्ते ततः शिष्टं तत्रैकद्वित्रिनामकः ॥
दर्जा स्वं शेषयेद् द्रव्यं बदर्जे वह्नि ३ संख्यके ॥ ३ ॥
तद् ग्रसेन्मात्रया विद्वानुद्दाममतिवैभवः ॥
उद्धारः प्रकृतेर्योग्य इति दर्जे मुरक्किवात ॥ ४ ॥

वाक्यम्-पुनर्वर्गक्रमेण वर्णाऽनुसारेणं तृतीयखण्डं विवृणोति-

## अथ वर्गः प्रथमः १.

### रदीफ-अलिफ ।

अतरीफल-कबीर ।

अर्शोद्रुमकुठारश्च वर्ण्यः कामसमृद्धिदः ॥
पक्वाशयहितः सम्यक्पाचनो बलदीपनः ॥ ५ ॥

स यथा-

फलत्रिकं शिवा जंगी पिप्पली मरिचं तथा ॥
सी ३० मिस्काल मितं ग्राह्यं प्रत्येकं विश्वभेषजम् ॥ ६ ॥
बूजीदां जातिपत्री च शक्काकुल् चित्रकोऽपि च ॥
तूदरी जर्द गुलगूं च चिलगोजा निस्तुषास्तिलाः ॥ ७ ॥
खश्खाश बह्मन-द्वंद्वं मिस्काल १० दशमानतः ॥
प्रत्येकं चूर्णितं सर्वं रोगन्बादाम-भावितम् ॥ ८ ॥
तपत्तौ द्विगुणे क्षौद्रे शीततौ त्रिगुणीकृते ॥
संयुक्तं प्रत्यहं प्रातरदेन मिस्काल १ मानतः ॥ ९ ॥

अतरी फल-सगीर ।

खदर् बादी बवासीर-हरो मेधाविवर्द्धनः ॥ १० ॥

स यथा-

श्यामा शिवा च त्रिफला दश १० मिस्काल मानतः ॥

प्रत्येकं चूर्णयित्वा च भाव्यं बादाम-सर्पिषि ॥ ११ ॥

मधुनि द्विगुणे योज्यं मिस्काले १ प्राशनं तथा ॥ १२ ॥

अतरीफल-कशनीजी ।

बुखार-कर्षणो मादा-दमाग-बलवर्द्धनः ॥

समस्तशीर्षशूलघ्नो नयनाऽऽमयनाशनः ॥ १३ ॥

स यथा-

त्रिफला चाऽसिता पथ्या मज्जा कुस्तुंबुरूद्भवः ॥

प्रत्येकं बीस्त-मिस्काल-मितं संचूर्ण्य भावयेत् ॥ १४ ॥

मध्ये रोगनबादाम सारवे द्विगुणे ततः ॥

सिद्धं मिस्काल १ मानेन भोजनांते समाहरेत् ॥ १५ ॥

अतरीफल, मुंकील ।

वाताऽर्शोनाशनो वातव्याधिविध्वंसनः सरः ॥

कफातंकांतकः पायुक्षतपूरणशोषणः ॥ १६ ॥

स यथा-

मुकल् अर्जक मिस्काल १० दश स्यात् गंदना-रसे ॥

मर्दयित्वा च मिस्काल ५० पिंजाह्-आमलकं न्यसेत्॥ १७॥

संचूर्ण्य द्विगुणे क्षौद्रे योजितं स्थापयेत्सुधीः ॥

मिस्काले १ द्वितयं वाऽपि नित्यं प्रातरदेन्नरः ॥ १८ ॥

अफलूनिया रूमी ।

पक्षाऽऽघातं च दंतार्तिशूलं कासं गलग्रहम् ॥

सप्ताहं सेवितो हंति दैत्यान्दैत्यांतको यथा ॥ १९ ॥

अहफीम । स यथा-

अफ्यून १० दश मिस्काल संबल् फित्रअसालयून् ॥

करप्स ४ चहार दिरम् भिषक् प्रत्येकमाहरेत् ॥ २१ ॥
सादज् हिंदी सलीखा च आक्रकरहा तथाऽपि च ॥
हव्वबिल्सां फर्फयून भिन्ना मिस्काल १ मानतः ॥ २१ ॥
रोगनबिल्सां तथा जैत रोगन्मादूगाव एव च ॥
मधुनि द्विगुणे योज्यमश्नीयाद्रक्तिका २ द्वयम् ॥ २२ ॥

अफलूनियाँ-दीगर ।

कूलिंज दर्दगुर्दा च कसूरत् तमस एव च ॥
बरूदतुरिहम् एतन्निरासनिपुणः स्मृतः ॥ २३ ॥

**टीका**-शूलं वृक्कवेदनां रजःसूक्ष्मतां स्तभं च गर्भाशयक्लेदं समस्तानेतान्निरस्यतीत्यर्थः ।

स यथा-

फिल्फिल् सुफेद बज्जुल्बंज् बीस्त २० मिस्काल-सम्मितम्॥
भुजंगफेनश्चाकारकरभः फर्फयूनऽपि ॥ २४ ॥
प्रत्येकं १० दश मिस्काल तदर्द्धं कुंकुमं स्मृतम् ॥
मिस्काल जुंदबेदुस्तर् नीम मिस्कालऽमूनि तु ॥ २५ ॥
दरूनजऽक्वी मुश्क जरंबाद च रोहिषम् ॥
ना ख्रुयुक्तो मुखारीद इति सर्वं विचूर्णयेत् ॥ २६ ॥
मधुनः चाशनी कृत्वा तत्र सर्वं विनिक्षिपेत् ॥
गुंजायुग्ममदेत्मातर्वातातंकमहाहिवत् ॥ २७ ॥

अयारज-फीकरा ।

बजेसुफासिल् कूलिंज लक्वा फालिज एव च ॥
सुदाय दर्द मादा च खदर १ जिह्वाऽऽमयान्हरेत् ॥ २८ ॥

स यथा-

मस्तगी जाफरां सुंबल् हव्वबिल्सां तथा पुनः ॥
ऊदबिल्सां असारून दारचीनी ततः परम् ॥ २९ ॥
सलीखा च समाहार्यं भिन्नं मिस्काल १ संमितम् ॥
सिबर्सकूतरी चाऽष्ट ८ मिस्काल-द्वय-सी ३० भवेत् ॥
चूर्णितं मधुसंमिश्रमनुभाव्यं प्रयत्नतः ॥ ३० ॥

**टीका**-पथ्याऽशिनेत्यर्थः ॥ इति प्रथमो वर्गः १.

# अथ वर्गो द्वितीयः २.

## रदीफ बे ।

### बुखूरे ।

टीका–कि सुदे बीनी बुकुशायद–नासाऽवरोधहरः स्वेदः । बफारा भाषायाम् ॥

स यथा–

बाकला सिरका मध्ये परिपाच्य प्रकल्पयेत् ॥
संवेष्टय वाससांगानि स्वेदाऽऽकृष्टिं च मूर्द्धनि ॥ ३१ ॥
तेनापयाति निखिलो दोषसंघोऽलिकांबरात ॥ ३२ ॥

### बुखूरे दीगर ।

टीका–कि हमी अमल कुनद–अपरः प्रयोगः पूर्वोक्तगुण एव ॥

स यथा–

सिर्का–संपक्वगोधूमतुषस्वेदोऽलिके धृतः ॥
बुखार–कर्षणः सद्यः पीडानाशं करोति च ॥ ३३ ॥

### बरशादशा ।

दाफे सुरतइंजाल जुकाम नजलाऽग्रहः ॥
शूलघ्नश्चाऽपि निर्दिष्टः कोष्ठशैत्यनिबर्हणः ॥ ३४ ॥

टीका–सुरतइंजाल सद्यः शुक्रस्खलनम् ॥

स यथा–

फिल्फिल् सुफेदा बञ्जुलबंज् पृथङ् मिस्काल २० विंशतिः॥
तिर्याक दश १० मिस्काल तदर्द्धं ५ जाफरां स्मृता ॥३५॥
आकारकरभो मांसी फर्फयून तथैव च ॥
प्रत्येकं चंद्र १ मिस्काल चूर्णितं मधुमिश्रितम् ॥ ३६ ॥

टीका–शर्बत रत्ती १ ॥

इति द्वितीयो वर्गः २.

# अथ वर्गस्तृतीयः ३.

## रदीफ ते ।

### तिर्य्याक-समानिया ।

**टीका**—अष्टांग इत्यर्थः ॥

समस्तविषकीटानां विषघ्नः श्वासकासहृत् ॥
वक्षः पक्वाऽऽलयाऽर्तिं च संहरेदचिरादयम् ॥ ३७ ॥

स यथा—

रेवँद्चीनी जंतियाना जराविंदतवील च ॥
पोस्त बेखकिबर् हव्वलगार कुस्ततलख् पृथक्
मुर्रमक्की त्रियामा च मिस्काल ८ वसवः स्मृताः ॥
साधितं द्विगुणे क्षौद्रे सिद्धं वैद्यः समाहरेत् ॥ ३९ ॥
मिस्काले १ द्वितयं २ वाऽपि भजेन्मात्रां गुणावहाम् ॥४०॥

### तिर्य्याक-अर्बे ४ ।

कासं पक्वाशयाऽर्तिं च श्लेष्मोद्रेकं शिरोरुजम् ॥
सूर्य्याऽऽवर्त्ताऽर्द्धभेदौ च क्षिप्रं क्षपयति ध्रुवम् ॥ ४१ ॥

स यथा—

जंतियाना जराबिंदतवील मक्कई तथा ॥
हव्वलगार इति ग्राह्यं तुर्य ४ मिस्काल—संमितम् ॥ ४२ ॥
प्रत्येकं चूर्णितं क्षौद्रे द्विगुणे योजयेद्बुधः ॥
सिद्धमेवं प्रतिदिनं मिस्काले १ प्राशयेत्पुमान् ॥ ४३ ॥

इति तृतीयो वर्गः ३.

---

# अथ वर्गश्चतुर्थः ४.

## रदीफ जीम ।

### जलंजवीन-गुलंगवीन ।

खदन् फालिज लक्वा च तमद्दुद तशन्नुज ॥

सुयुल्क्नियां च इस्तिस्का बल्गमी रा दफे कुनद् ॥४४॥

टीका—सुयुल्कनियां इस्तिस्काऽभिधानाऽऽमयस्य पूर्वरूपाऽर्तकः ।

स यथा—

अवृंतकिंजल्क गुलाब पुष्पप्रस्थैर्विमर्याऽथ खराऽऽतपेन ॥
क्षौद्रे पुराणे विपचेत्तु चत्वारिंश ४ द्दिनानि क्रियेति सिद्ध्येत॥४५

टीका—चतुर्गुणे मधुनीत्यर्थः ॥

जवारश—खबसुलहदीद ।

वर्णप्रसादनी पक्वाशयाऽग्निबलवर्द्धिनी ॥
कामसंदीपिनी रेतःस्तंभिन्यर्शोनिबर्हिणी ॥ ४६ ॥

सा यथा—

खूसुल्हदीद सप्ताऽहं ७ सिर्का—भावनया स्थितम् ॥
छायाशुष्कं शत १०० दिरम् रोगन्बादाम—भावितम् ॥४७॥
त्रिफला पूतना जंगी पिप्पली वत्निकस्तथा ॥
नागरं मुस्तकं मांसी पृथग्दश १० दिरम् मतम् ॥ ४८ ॥
गंदना शिफ्तबीजं च भिन्नं तुर्य ४ दिरम् स्मृतम् ॥
कस्तूरी—दिरम २ द्वंद्वं सर्वमेकत्र चूर्णयेत् ॥ ४९ ॥
चाशनी मधुनः कृत्वा क्षिप्त्वा तत्र विनिक्षिपेत् ॥
शिलायां तेन तीव्रत्वमौषधीनां प्रशाम्यति ॥ ५० ॥
दिरम् एकां समारभ्य सप्ताऽहं ७ वर्द्धयेत्सुधीः ॥
सप्ताह ७ मपकृष्यैवं पुनः संवर्द्धयेत्तथा ॥ ५१ ॥
क्रमेणानेन सततं यावन्नैरुज्यमश्नुते ॥ ५२ ॥

जवारिश—खबसुल्हदीद ।

टीका—दीगर-दिगर पर्य्यायावपरस्य प्रकीर्तितौ । अपरः प्रयोगोऽस्या एव ॥

जिगर मादा वाह बलमेधनं च तनोति या ॥
वर्णप्रसादिनी वृष्या बलवीर्यविवर्द्धिनी ॥ ५३ ॥

सा यथा—

त्रिफला चेतकी श्यामा त्र्यूषणं वह्निमुस्तके ॥

फलपूरफलत्वक् च मंडूरो भावितोऽन्वहम् ॥ ५४ ॥
सिर्का—द्रवे तुषैर्हीनास्तिलाः प्रत्येकमाहरेत् ॥
दिरम् १० दश बदस्तूर सावक् नुस्खे क्रिया स्मृता ॥ ५५ ॥
क्षौद्रं तदनुसारेण साधयेद् यत्नतो भिषक् ॥ ५६ ॥

जवारिश-तुरंज ।

दिल् दमाग जिगर् मादा कर्तृत्वचलवर्द्धिनी ॥
क्षुद्बोधिनी ज्वरघ्नी च वातश्लेष्माऽपकर्षिणी ॥ ५७ ॥

सा यथा—

सी ३० दिरम् बीजपूरस्य गर्भत्वग्देवपुष्पकम् ॥
एलाद्वयं कणा शुंठी खूलिंजा चोत्तमोत्तमाः ॥ ५८ ॥
जातीफलं दारचीनी प्रत्येकं दिरमे १ स्मृतम् ॥
मुश्क दाँगे १ व नीमृ सर्वं वाससा शुद्धमाचरेत् ॥ ५९ ॥
मधुनि द्विगुणे पक्वे संमिश्र्य दृषदि क्षिपेत् ॥ ६० ॥

टीका—त्रिगुंजो दांग इति मानविशेषपर्यायः । नीमृ अर्द्धपर्यायः ॥ । इत्यनेन सार्द्धचतुरक्तिका ४॥ प्रमाणं सिद्धम् । मात्रा कालवलाऽवस्थाऽनुरूपा ॥

जवारिश् ऊद ।

पक्काशयशिरःस्वातद्रविणोपचयावहा ॥
शीतज्वरश्लेष्मवात तस्कीन कृत्यकारिणी ॥ ६१ ॥

सा यथा ।

त्वक्तुरंज--फलसंभवाऽगुरुर्बाणसंख्य ५ दिरम पृथक्कया ॥
देवपुष्पमथ मस्तगी तथा भिन्नमाग्नि ३ दिरम स्मृतो बुधैः ६२॥
मांस्येला दारचीनी च प्रत्येकं दिरम २ द्वयम् ॥
कुंकुमं दिरमे १॥ सार्द्धं चपला नागरं तथा ॥ ६३ ॥
पृथक् च दिरमे १ सर्वं क्षुण्णं द्विगुणसारघे ॥
सितायां साधिता प्राग्वद्यथोक्तगुणकारिणी ॥ ६४ ॥

अन्यच्च—

टीका—गुणाः पूर्वोक्ता एव ॥

जवारश-ऊद-दीगर ।

लवंगबीजपूरत्वग्दारचीनी दिरम्-युगम् ॥
ऊद् पंज ५ दिरम् सर्वं क्षुण्णं क्षौद्रे सितायुते ॥ ६५ ॥
द्विगुणे पूर्ववत्साध्या प्रक्रियाऽस्या भिषग्वरैः ॥ ६६ ॥

टीका-तरकीब दीगर हमी । किंवाऽपरः प्रकारः । शिरोहृदाऽऽतकनिवर्हणीयम् ॥

सा यथा-

ऊद् बाण ५ दिरम् बीजपूरत्वक् मस्तगी तथा ॥
दिरमे १ द्विगुणे ग्राह्ये सद्वैद्यैः सितसारघे ॥ ६७ ॥
विधाय पूर्ववत्सर्वं युक्त्या सेव्या स्मरर्द्धिकृत् ॥ ६८ ॥

जवारश अंबर ।

खफ़कान जाफदिल् आधिव्याधिहर्त्री प्रसादकृत् ॥ ६९ ॥

सा यथा-

अशीतिरेकशतकं १८० कन्द् मिस्काल उत्तमः ॥
मधुवत्साधयेदग्नौ शिशिरेऽस्मिन्विनिक्षिपेत् ॥ ७० ॥
अम्बर् अशहब ग्राह्यं वेदश्मुश्क-विमर्दितम् ॥
सिद्धैषा सेविता कांताकर्दबकमुदावहा ॥ ७१ ॥

जवारश-मस्तगी ।

सर्दी मादाऽपरीपाकं वक्त्रादम्भःस्रुतिं हरेत् ॥
नफ़्तअन्दोह गशियानऽनिलश्लेष्मवैकृतम् ॥ ७२ ॥

सा यथा-

नवात मिश्री हफ्ताद मिस्काल २०० द्विशतं वरा ॥
चाशनी विहिता चास्यास्तस्यां पश्चान्नियोजयेत् ॥ ७३ ॥

या हस्ताद्-

हिमायां मस्तगी-नीरपिष्टा सि ३ दिरम क्रिया ॥
प्रागुक्तसदृशी शश्वत्सेवनाद्वर्णपुष्टिकृत् ॥ ७४ ॥

जवारश-कमूनः ।

पक्काऽऽशयद्रविणदा पाचनी वातशूलहृत् ॥
स्रोतःसंशोधिनी चाऽम्लपित्तविद्राविणी स्मृता ॥ ७५ ॥

सा यथा-

जीरकं शत १०० मिस्काल सिर्का-भावितमाचरेत् ॥
सुदाब ऊषणं शुण्ठी सी ३० मिस्काल पृथक् पृथक् ॥७६॥
बूरा इरमनी शुद्धो दिग् १० दिरम्--प्रमितः स्मृतः ॥
मधुनि द्विगुणे साध्यः पूर्ववद्गुणवत्तरः ॥ ७७ ॥

द्वितीयः प्रकारः।

वाक्यम्--जीरा मुदव्वर दर सिर्के १००मिस्काल सद सालेमुदाव चहल् ४० मिस्काल फिलफिल गिर्द जंजवील बूरे इर्मनी अजहर्यकूदह १० मिस्काल क्षौद्रे प्राग्वत्साधयेत् ॥

इति चतुर्थो वर्गः ४.



# अथ वर्गः पंचमः ५.

## रदीफ-हे।

हव्व-अयारजः।

टीका-हव्व-गुटिकापर्यायः ॥

सा यथा-

अयारज्फीकराऽऽदेयो मिस्काले १ त्रिवृताऽर्जुना ॥
निस्तुषा भाविता रात्रौ रोगन्बादाम-योगतः ॥ ७८ ॥
दिरमे १ ऽथाऽर्द्ध दिरम प्रत्येकं त्रीणि योजयेत् ॥
हव्वह्लील अनेसूं च तथा गारयकूनऽपि ॥ ७९ ॥
शहम् हिंजल दांगे १ स्याद्दासःशुद्धं समाचरेत् ॥
स्वरसेन कषायेण शतपुष्पाभवेन वा ॥ ८० ॥
गुटी चणकसंकाशा मधुनाऽद्यात्प्रगे पुमान् ॥
समस्तशीर्षरोगघ्नी कफवाताऽनुलोमनी ॥ ८१ ॥

हव्व-सिवरः।

सुदाय दर्द मादा च शूलगुल्मनिशातनी ॥ ८२ ॥

सा यथा-

सिवर्सकूतरी ग्राह्यो मिस्काले १ त्रिवृता १ दिरम् ॥
ह्व्वनील अनेष्ठं च पुनर्गायरकूनऽपि ॥ ८३ ॥
इति नीम दिरम् प्रोक्तं विशालायाः फलं तथा ॥
नमक् हिन्दी च दांगे १ स्तः सार्द्धमानेन गुग्गुलुः ॥ ८४ ॥
कतीरा च द्वयं दांग १ करफस शतपुष्पयोः ॥
रसेन गुटिका कार्याऽनुभवेत्पूर्ववद्भिषक् ॥ ८५ ॥

ह्व्वशवयारू ।

टीका-गुटिका रजनीसखीति नाम्ना प्रसिद्धा ॥

सुदाय् सुदुर द्व्वार सरय् संहारिणी सरा ॥ ८६ ॥

सा यथा-

सिवर्सकूतरी वह्नि ३ दिरम श्रेयसी तथा ॥
गुलाब-कुसुमं श्यामा मस्तगीति पृथक्कया ॥ ८७ ॥
सार्द्धैके १॥ दिरम क्षेप्याश्चूर्णिता बादियां जले ॥
मिस्काले गुटिकां कृत्वा स्वापाऽनेहसि भक्षयेत् ॥
शोधनी कृत्स्नदेहस्य वर्णाऽग्निबलवर्द्धिनी ॥ ८८ ॥

वाक्यम्-सुदाय-सुदुर-इति-

साधारणशिरःशूलसूर्यावर्त्ताऽर्द्धभेदकौ ॥
अपस्मारश्चतस्रः ४ स्युश्चतुर्णामभिधाः क्रमात् ॥ ८९ ॥

अपरप्रकारः ।

सिवर्सकूतरी शुद्धो गृह्णीयाद्दिरम ३ त्रयम् ॥
गुलाब-कुसुमं श्यामा मस्तगी दिरमे १ पृथक् ॥
सक्मूनियां कतीरा च सार्द्धैके १॥ दिरम स्मृतौ ॥ ९० ॥
प्रत्येकं चूर्णयेत्सर्वं सितच्छत्रांबुना गुटी ॥
मिस्काले १ स्वापसमये सेविता शर्म्म यच्छति ॥ ९१ ॥

---

१ त्रिगुंजापर्यायः । २ श्यामा त्रिवृता ।

हव्व अस्तम्खीकोन ।

संधिभेदांगमर्दौ च सौदावी बल्गमी पुनः ॥
संशोध्य दोषनिकरं शिरःकोष्ठांगणात्खलु ॥ ९२ ॥

**टीका**–निःसारयतीति शेषः ॥

सा यथा–

अयारज्फीकरा आशा १० दिरम द्वयसी भवेत् ॥
अभया फणिफेनश्च विस्फायज् गार्यकूनऽपि ॥ ९३ ॥
नमक् हिंदी पृथग्द्वंद्व २ दिरम् मुक्ल षड् ६ दिरम् ॥
कौशिकं बादियां रूमी रसे पक्वं विधाय च ॥ ९४ ॥
तस्मिन्संमिश्र्य सकलं गुटी स्याद्दिरमे १ निशि ॥
सेविताऽनिलरोगघ्नी हिमघ्नी दीधितिं विना ॥ ९५ ॥

हव्व कूकाया ।

गलीज खिल्त कोष्ठांतःसंश्लिष्टाऽऽकृष्टिचंचुरा ॥
सुदुर् दव्वार शीर्षाऽर्त्तिपार्श्वार्तिजठराऽर्तिनुत् ॥ ९६ ॥

सा यथा–

सिबर्सकूतरी अफ्संतेन–पत्राणि मस्तगी ॥
प्रत्येकं दिरम २ द्वंद्वं हिंजल् सक्मूनियां पृथक् ॥ ९७ ॥
दिरमे १ वाससा शुद्धं मिसि (शी) नीरेण पेषितम् ॥
मिस्काले १ गुटिकां बद्ध्वा प्रातरेकामदेन्नरः ॥ ९८ ॥

हव्व–उस्तूखदूस ।

सरयू सुदुर दव्वार नाडीदुर्नामनाशिनी ॥
भगंदर–बवासीर–नामानं हंति सत्वरम् ॥ ९९ ॥

**टीका**–नाडी भगंदरधमनीव्रणौ बवासीर–नाम्ना प्रथितौ ॥

सा यथा–

काबली[1] चेतकी[2] पथ्या पीता मिस्काल ५ पंचकम् ॥
रेचनी ७ सप्त मिस्काल सार्द्ध चाऽथ सिबर् पुनः ॥ १०० ॥

---

१ इति महाराष्ट्रभाषायाम् । २ हरीतकीत्यर्थः ।

सकूत्री ६ रस मिस्काल उस्तूखूदूस गार्यकून् ॥
अफ्तीमून शहम् हिंजल् विस्फायज् फिस्तकी तथा१०१॥
प्रत्येकमेक १—मिस्काल श्रीसंज्ञं फूतनज् परः ॥
भिन्नं दिरम १ पर्य्याप्तं शतपुष्पांबुमर्दितम् ॥ १०२ ॥
गुटिका दिरमे १ कार्या गुणसंपत्तिशालिनी ॥ १०३ ॥

नोयदीगर—अन्यः प्रयोगः ।

हलेलय् काबली पथ्या पीता श्यामा हरीतकी ॥
सिवर्सकूतरी ग्राह्यः प्रत्येकं दिरम ३ त्रयम् ॥ १०४ ॥
गार्यकून समादेयं चहार ४ दिरमोन्मितम् ॥
उस्तूखूदूस अफ्तीमून् पृथगर्द्ध—दिरम् मतम् ॥ १०५ ॥
चूर्णितं मर्दयेद्यामं श्रीरामतुलसीद्रवैः ॥
क्वाथेन वा गुटी कार्या दिरम—द्वयमानतः ॥ १०६ ॥

हब्बजुहब ।

नजूलुलमाय—शमनी दर्द चश्म—निवारिणी ॥
शिरःसंशोधिनी कोष्ठादामसंशोषिणी ध्रुवम् ॥ १०७ ॥

सा यथा—

सिवर् विंशति २० मिस्काल तदर्द्धं पूतना स्मृता ॥
कतीरा मस्तगी जाफ़्रां तथा सक्मूनिया पुनः ॥ १०८ ॥
प्रत्येकं च सि ३ मिस्काल गुलाब—कुसुमानि तु ॥
पंच ५ मिस्काल—योज्यानि सर्वं संचूर्ण्य वारिणा १०९ ॥
गुटिका दिरमे १ कार्य्या सेव्या पथ्याऽऽशिभिर्नृभिः ॥ ११० ॥

टीका—सुवर्णगुणसादृश्याज्जुहब नाम्ना प्रसिद्धा ॥

हब्ब बनफ़शा ।

सुदाय अर्द्धशीर्षार्त्ती रमदऽक्षिजलाऽऽगमः ॥
तेजोद्वेषश्च शोणत्वं यामासाद्य लयं व्रजेत् ॥ १११ ॥

सा यथा—

बनफ़शा नेत्र २ मिस्काल मिस्काले १ तुर्बुद स्मृता ॥

रुव्वसूस अनेसूं च कायस्थाऽर्द्ध-दिरम् भवेत् ॥ ११२ ॥
बादियां-स्वरसे पिष्ट्वा कंदपाके गुटीः क्षिपेत् ॥
सायं प्रातः समश्नीयादेकैकां प्रत्यहं नरः ॥ ११३ ॥

हव्व-गारयकून।

बजेमुफासिल् इस्तिस्का फिरंगाऽऽमयनाशनी ॥ ११४ ॥

सा यथा-

सिबर्सकूतरी अफतीमून षड् ६ दिरमपृथक् ॥
गार्यकून दिरम् चार ४ दिरमे १ सकमूनिया ॥ ११५ ॥
अनेसोक् ईरसा भिन्नं दिरम द्वय २ मीरितम् ॥
श्लक्ष्णं संचूर्ण्य दिरमे १ शुद्धोदे[१] गुटिका स्मृता ॥ ११६ ॥

हव्व सकवीनज।

कूलिंज अंत्रपीडां च दुर्नामपवनाऽऽमयान् ॥
मूत्ररोधं रजःस्तंभं कोष्ठशैत्यं नियच्छति ॥ ११७ ॥

सा यथा-

अंजरूत सिवन् सक्वीनज तुख्मा करफस च ॥
पथ्या सार्द्ध दिरम् युग्मं २॥ त्रिवृद्दिरम युग्मकम् ॥ ११८ ॥
शहम् हिंजल् १॥ सार्द्ध--दिरम् सर्वं संचूर्ण्य चांभसा ॥
गटिकैक १ दिरम्--माना सेवनीया नृभिर्निशि ॥ ११९ ॥

हव्व-शीतरजः।

वजेमुफालिल शिराशैत्यघ्नी हैज मूत्रनुत ॥
मुसस्खिन् मुप्तिही मुस्किन् मुंजिज् तुर्या ४श्च शक्तयः१२०

सा यथा-

तुर्बुद् दश १० दिरम् बीस्त २० दिरम् सिवर आहरेत् ॥
दिरम् खोर्दिल् मिलह् हिन्दी नागरं चित्रकं वचा ॥ १२१॥
अथवा दिरम २ द्वे स्युराकारकरभः कणा ॥
प्रत्येकं दिरमे १ ग्राह्ये फानीज् चार ४ दिरम् भवेत् ॥२२॥

---

१ शुद्धजले।

संचूर्ण्य गन्दना–नीरेऽथवा कलम–संभवे ॥
गुटिका दिरमे १ युग्मं २ किंवा वैद्यः समाचरेत् ॥ १२३ ॥

हव्व–दाराफिल ।

कृष्णा च देवकुसुमं कुंकुमं सममीरितम् ॥
दारचीनी च तुल्या स्यात् तरखून तदर्द्धकम् ॥ १२४ ॥
तदर्द्धं मुश्क संयोज्यं नागवल्लीरसैर्वटीः ॥
विधाय वदने धार्या वातश्लेष्महराः स्मृताः ॥
हिक्काश्वासविसंज्ञत्वकासनीहारभास्करः ॥ १२५ ॥

हव्वमुश्क ।

दमाग दिल् जिगर् मादा विशेषद्रढिमप्रदा ॥
आस्यसौरभ्यचिन्मोदकामाऽग्निगुणदाऽपि च ॥ १२६ ॥

सा यथा–

जातीफलं जातिपत्री दारचीनी च मस्तगी ॥
प्रत्येकमेणनाभिश्च नीम मिस्काल आहरेत् ॥ १२७ ॥
किंवा जोजब वा जातीपत्री मिस्काल १ मानतः ॥
नवात मिस्री मिस्काल १०० शतकं विशदं पुनः ॥ १२८ ॥
सर्वं संचूर्ण्य संमर्द्य गुलाब–कमले युते ॥ १२९ ॥
समगवी कतीराभ्यां गुटी स्याद्रक्तिकाद्वयम् ॥
सुधा पीतेव सन्धत्ते सुखं मुकवलीकृता ॥ १३० ॥
रसप्रदो रसोऽस्याः स्याद् वृष्यः स्नेहनबृंहणः ॥ १३१ ॥

हव्व–सिमाक ।

रक्ताऽतीसारशमनी रक्तपित्तनिबर्हिणी ॥
निहन्याद्वमथूदन्ये हाबिस् काबिज शक्तियुक् ॥ १३२ ॥

सा यथा–

सिमाक दिरम २ द्वंद्वं माजू पोस्त अनार च ॥

१ गुणी वर्णः ।

क्रमशो दिरमेऽर्द्धं १ च हव्बुलीस च दिग् १० दिरम् १३३॥
संमर्द्य गुटिका कार्या समगवी द्रवे सता ॥
द्राक्षाबीजद्रवैः प्रातः प्राशिता दिरमे १। सवा॥ १३४ ॥
निर्हंति दवथुक्लेदं सद्यश्छायाऽऽतपं यथा ॥ १३५ ॥

हव्व पोस्त अनार ।

टीका-सुआल-मुजमिन् रा जायल गर्दानद-चिरंतनकासहरीत्यर्थः ॥

सा यथा-

अनार जिल्द नत्रून पिप्पली धर्म्मपत्तनम् ॥
गुडेन गुटिका कासपन्नगीविनता भवेत् ॥ १३६ ॥

हव्व सुआल ।

निर्हंति सपदि श्वासं सुर्फं वारिद बल्गमी ॥ १३७ ॥

सा यथा-

बादियां मरिचं भिन्नं द्वि २॥ मिस्काल तथाऽर्द्धकम् ॥
पंज ५ मिस्काल कंद स्याद्विधेया गुटिकांबुना ॥ १३८ ॥
शर्म्मदा कासिनः पुंसोवक्त्राऽब्जभ्रमरीकृता ॥ १३९ ॥

हव्ब-सुआल दीगर अपरेयमेव ।

सा यथा-

बाह्यांतस्तापशमनी पित्तकासनिवर्हणी ॥
वदने विधृता प्रायः पराद्भुतगुणप्रदा ॥ १४० ॥

तथा हि ।

रुब्बसूस निशास्ता च द्राक्षा किश्मिश एव च ॥
सि ३ दिरम् भिन्नशो ग्राह्यं वैद्यवर्यैः प्रयत्नतः ॥ १४१ ॥
समगऽवी कतीरा च तुख्मकद्दू दिरम् १ भवेत् ॥
सितोपलोऽर्द्धमानः स्याद्गुटी कार्या बिही-रसैः ॥ १४२ ॥

किंच-

उरःक्षततयोद्भूतं कासं पित्तसमुद्भवम् ॥
कवलीकरणाद्धंति बृंहणी तर्पणी परा ॥ १४३ ॥

सा यथा-

निशास्ताऽथ कतीरा च समगऽवी पृथक् पृथक् ॥
दिरम ३ त्रयमादेयं तुख्म खश्ख़ाश रुब्बसूस् ॥ १४४ ॥
माज़ू तुख्म बिही चेति भिन्नं ४ चार दिरम् भवेत् ॥
मग्ज कद्दू च बादाम निस्तुषाश्च दिरम् १० दश ॥ १४५ ॥
कंद पंचदश १५ ग्राह्यो अस्पगोल-जले गुटी ॥ १४६ ॥

इति वर्गः पंचमः ५.

## अथ वर्गः षष्ठः ६.

### रदीफ़-खे ।

#### खिजाबे ।

टीका-कि मीय रा स्याह गर्दानद-केशरञ्जनमित्यर्थः ॥

सा यथा-

चत्वारिंशद्दिरम् वस्मा हिना पंज ५ दिरम् मिता ॥
केशा रोगन्गुल् आक्ताः स्युः क्षालिता उष्णवारिणा ॥ १४७ ॥
ततो निशि प्रलेपेन श्लक्ष्णाः श्यामाः सुकुंतलाः ॥
प्रातर्धात्री-बरग्मूरद् सिमाक-पयसा क्रमात् ॥ १४८ ॥
क्षालिताः सुदृढा दीर्घा नीलनीरदमेचकाः ॥
चिरस्थायिगुणाः स्निग्धा भवेयुर्विशदा अपि ॥ १४९ ॥

टीका-एवमपरेऽपि ज्ञेयाः ॥

इति षष्ठो वर्गः ६.

## अथ वर्गः सप्तमः ७.

### रदीफ़-दाल ।

#### दवायुल्मुश्क ।

जाफदिल् मर्ज सौदावी खफ़्काँ कोष्ठचं च हैमनम् ॥
संहरेद्दुर्विणीसूनुं सूते संसेवयाऽव्ययम् ॥ १५० ॥

स यथा-

हरीर विद्रुमं मुक्ता कहर्बा च ततः शटी ॥
दरूनज्ज् अक्रबी चेति मिस्काल् १ एकं पृथक् पृथक् ॥१५१॥
मांस्येला देवकुसुमं पत्रकं च घन २ द्वयम् ॥
दव्वालक् जुंदबेदुस्तन् भिन्नं च दिरमे १ स्मृतम् ॥ १५२ ॥
कणा शुंठी मृगमदः प्रत्येकं दिरमाऽर्द्धकम् ॥
संचूर्ण्य द्विगुणे क्षौद्रे लेहवत्साधयेत्सुधीः ॥ १५३ ॥

टीका-अपके मधुनीत्यर्थः ॥

दवायुल्मुश्क-वारिद ।

क्षयं शोषं रक्तपित्तं ज्वरं जीर्णं वमिं तृषाम् ॥
मूर्च्छां क्लमं च वैवर्ण्यं वैमनस्यं हरेद् द्रुतम् ॥ १५४ ॥

स यथा-अपरा याकूतीव ।

सुवर्णदुर्वर्णदलानि मुक्ता प्रवालमेणस्य मदः पृथक् च ॥
मिस्काल१मानंपुनरर्द्धमानं शुद्धांबरं क्षेप्यमितो भिषग्भिः १५५॥
एलाद्वयं तवाशीर कहर्बा बह्मन २ द्वयम् ॥
गुलाब-कुसुमं चेति मिस्काल युगलं २ पृथक् ॥ १५६ ॥
तपतौ च हिता स्वास्थ्ये कामज्वरनिबर्हणी ॥ १५७ ॥

वाक्यम्-दवाये कि फासिद सफ्रा रा अज इस्तफराग दफे गर्दानद भेषजं वांत्या पित्तनिरासकृत श्लेष्मघ्नमपि ॥

तद्यथा-

शिकंजवीं कंद-भवां दश १० मिस्काल-माहरेत् ॥
अस्फनाख्-जलं खत्मी रसो वाऽस्माच्चतुर्गुणः ॥ १५८ ॥
कश्क जो-संभवं वारि संमिश्य प्राशयेद्द्रुतम् ॥
वामयेत्पित्तमुद्रिक्तं कंठहृद्दाहशांतिदम् ॥ १५९ ॥

टीका-यवतुषाणां शृतांभः ॥

वाक्यम्-दवाये कि सफ्रा बल्गम् रा इस्तफराग कुनद औषधं वमनान्मायुश्लेष्माऽपहम् ॥

तद्यथा-

शिकंजवीं क्षौद्रसमुद्भवा तु मिस्काल १० दिक्संज्ञमिता प्रदेया॥
चतुर्गुणं मूलकवारि शुद्धं मिस्काल२युग्मं सितमाणिमंथम् १६०
कोष्णं संप्राशितं सद्यो वांत्या दोषाऽपकर्षणम् ॥
कंठहृज्जठरांत्राणां मार्जनं क्षुत्प्रबोधनम् ॥ १६१ ॥

अन्यच्च-बेखसोसन् ।

तरोसोआवेवतिर्शीदे शिस-बीजं पृथक्पृथक् ॥
खत्मी-बीजं यवतुषा मिस्काल ३ त्रयसंमिताः ॥ १६२ ॥
नीरे प्रस्थमिते पाच्यं तुर्ये ४ शेषं समाहरेत् ॥
अंगूरी तुर्श सिर्का च अफ्तीमून् शर्बत पृथक् ॥ १६३ ॥
दश १० मिस्काल-मानेन संमिश्र्य क्षुण्णमात्रतः ॥
बद्धाऽक्षिजठरः कोष्णं सुखेप्सुः प्रपिबेत्पुमान् ॥ १६४ ॥

वाक्यम्-दवाये कि कय सफरावीरा जालय गर्दानद गशि-
यां रा तल्कीन् दिहद-

टीका-भेषज पित्तवातिशमनमुत्क्लेदहर च ॥

तद्यथा-

सिमाक् तवाशीर अनारदाना मिस्काल १ दशाःप्रवराश्चयोऽपि॥
सम्प्राशितं दाडिमवारिणेदं चूर्णं वमीवाहनिरोधकं स्यात् ॥१६५॥

वाक्यम्-दवाये कि कय सफरावी बल्गमी रा नफे रसा-
नद-भेषजं श्लेष्म पित्तं वमथुं प्रति गुणावहम् ॥

तद्यथा-

मस्तगी देवकुसुमे ऊद कश्नीज एव च ॥
प्रत्येकं नीम मिस्काल ग्राह्यं संचूर्ण्य भक्षयेत् ॥ १६६ ॥
जरश्क-स्वरसैः प्रातः समयेऽपेक्षितेऽपि च ॥
मुज्तरिक् पक्वभवनं कवीगर्दानद क्षणात् ॥ १६७ ॥

वाक्यम्-दवाये कि इस्तुफराग सौदावी सफरावी बल्गमी
दमवी हरअनवाये कि बाशद जायल गर्दानद-
समस्तदोषजाऽऽगन्तुजप्रौढवांतिहरं भेषजम् ॥

तद्यथा–

कहर्वा पादपाऽम्लं च मस्तगी विद्रुमं तथा ॥
नीम–मिस्काल–मानेन प्रत्येकं चूर्णितं भिषक् ॥ १६८ ॥
बिही–रसेन संदद्याद्वथुं वमथुं हरेत् ॥
तृष्णां शोणितवैकृत्यं वक्षसो दोषसंचयम् ॥ १६९ ॥

वाक्यम्–दवाये कि रुआफ रा बुबन्दद–घ्राणोत्थरक्तस्रुतिरोधभेषजम्–

तद्यथा–

कार्गलं भसितं शोणशिखस्याण्डऽत्वचोऽथवा ॥
अफ्स–भस्ममषीद्रावैः कौशेयं तैः प्रलेपयेत् ॥ १७० ॥
नसि स्थितं रुणद्ध्याऽऽशु रक्तपित्तं तदुत्थितम् ॥
शिरोऽक्षिसंज्वरं सद्यो धनं निर्धनतामिव ॥ १७१ ॥

अन्यच्च–

दाडिमीफलभवत्वचो रजो भस्म वा अफ्स–संभवं तथा ॥
घ्रातमुद्धतरुजाकरं द्रुतं स्तंभयेद्रुधिरवेगमुल्बणम् ॥ १७२ ॥
घ्रात्वा शीतांभसा नासाक्षालनं विदधन्मुहुः ॥
शमाऽऽशु लभते जन्तुः पातकी तीर्थतो यथा ॥ १७३ ॥

टीका–पूर्वश्लोके वा समुच्चयाऽर्थः।

किंच–

निशास्ता गैरिकं ग्राह्यं भिन्नं मिस्काल–१ मानतः ॥
दाडिमीमुकुलं चाऽपि नीम मिस्काल–सम्मितम् ॥ १७४ ॥
सूक्ष्मं पिष्टं नसि धमेत्ततः संक्षालयेन्नरः ॥
धान्यांभसा खूबकलां वारिणा वा विचक्षणः ॥ १७५ ॥
सद्यः सुखमवाप्नोति सुधां प्राप्याऽमरो यथा ॥ १७६ ॥

वाक्यम्–दवाये कि इसरबोल रा दफे कुनद–मूत्रकृच्छ्रघ्नमौषधम् ॥

तद्यथा–

शतपुष्पाऽजमोदा च मिस्काल २ द्वितयं पृथक् ॥
प्रस्थाऽर्द्धेऽम्भसि संपाच्य तदर्द्धमुपसंहरेत् ॥ १७७ ॥
संशोध्य वाससा पञ्च ५ मिस्काल–प्रमितं त्यजेत् ॥
बीजं खुर्पज–सम्भूतं नीरपिष्टं पयोनिभम् ॥
शुक्ल–कन्द–समायुक्तं पीतं मूत्ररुजाऽपहम् ॥ १७८ ॥
रोधाऽपहं च कथितं शिवाऽर्चनमिवापदम् ॥

टीका–खुर्पज–शीर्णवृंतं सूर्यांशुराकानामाऽर्थः ॥

वाक्यम्–दवाये कि इदरार बोल कुनद हरोरत् मसाने रा फरो कशद–औषधं मूत्ररेचनं वस्त्याऽऽशयोष्मशमनं श्रेष्ठं च ॥

तद्यथा–

खियारेन–बीजं तथा शीर्णवृंतोद्भवं तुख्म–भिन्नं च कर्षप्रमाणम् ॥
जले पेषितं क्षीररूपं विधेयं अनेसूं शताका–श्रृतेनाऽपि युक्तम्१७९
सिता संगतं पीतमेवद्दिनेन द्रुतं मूत्रदोषं निरस्तं करोति ॥
भुजंगप्रयातं यथा वर्द्धमानं स्वपक्षेण तार्क्ष्यो महाचण्डवेगः॥१८०॥

वाक्यम्–दवाये कि हब्स बोल रा बुकुशायद–मूत्राघातघ्नभेषजम् ॥

तद्यथा–

अनेसूं दीप्यकश्चाऽपि प्रत्येकं दिरम ३ त्रयम् ॥
सिता युग ४ दिरम्–माना त्रयं संचूर्णितं चरेत् ॥ १८१ ॥
कुडवं क्षीरमाजं च तस्मिन्संपेषयेद्दः ॥
खियारेन–भवं बीजं बीजं खुर्पज–सम्भवम् ॥ १८२ ॥
बिडालपदकं चूर्णं प्राश्य सिद्धं ततः पयः ॥
पिबन्नरोऽश्नुते शातं कारागाराद्विमुक्तवत् ॥ १८३ ॥

वाक्यम्–दवाये कि हैज बिरानद जायू रजःस्तंभविभेदनोऽयम् ॥

स यथा–

कहेलाकारवी–भिन्नं मिस्काल २ द्वितयं नवम् ॥

पुनर्गिर्द जराबिन्द अनेसूं च पृथक्पृथक् ॥ १८४ ॥
सि मिस्काल उभे ग्राह्ये जुंदबेदुस्तर क्रमात् ॥
अवहल्व द्वि २ दिरम–द्वंद्व २ सर्व संचूर्ण्य यत्नतः ॥ १८५ ॥
मधुयुक्तमुषःकाले मिस्काले १। ऽन्विताम्बिनी ॥
भवेदृतुमती साधुसुतं सूते निरामया ॥ १८६ ॥
अनु पेयं सितच्छत्राजलं संस्वेदसम्भवे ॥
चत्वारिंश ४० दिरम्–मानं शोधनं वर्ष्मणः परम् ॥ १८७ ॥

वाक्यम्–दवाये कि बदन् रा फर्बह गर्दानद्–देहपुष्टिकरभेषजं परम् ॥

तद्यथा–

बाकला हारिमंथश्च गोधूमस्तंदुलस्तथा ॥
चत्वारश्चूर्णिता भृष्टाः शर्करा सर्पिषांभसा ॥ १८८ ॥
पाचिताः प्राशिताः प्रायः प्राज्यपुष्टिबलप्रदाः ॥ १८९ ॥

टीका–हलुवा मोहनभोग इति लोके, बादामयोगेन प्रशस्ततरो वृष्यो बृंहणश्च ॥

वाक्यम्–मिन्वाद व हम्मामरबद अनन्तरं विवातस्थाने स्नानाऽगारे साभ्यंगमभिषेकं कुर्यात् ॥

अन्यच्च–

गोधूमहारिमंथानां यवानां चूर्णितं पृथक् ॥
दश १० मिस्काल–दघ्नं च भृष्टं गव्येन सर्पिषा ॥ १९० ॥
मगज् बादाम खश्खाश सी ३० मिस्काल–मिताः पृथक् ॥
प्राशयेत्प्रत्यहं प्रातः पक्त्वा सक्षीरशर्करम् ॥ १९१ ॥
हम्माम- विषये स्नात्वा भवेत्पीनवपुः पुमान् ॥ १९२ ॥

वाक्यम्–दवाये कि बदन् रा लागर गर्दानद–भेषजं मेदोनिर्लेखनं कार्श्यकरं च ॥

तद्यथा–

सुदाव बादियां चेति जीरकं दीप्यकस्तथा ॥
यवानी चेति संग्राह्यं पृथङ् मिस्काल ५ पंचकम ॥ १९३ ॥

मर्जंगोश च तंकार भिन्नं मिस्काल २ युग्मकम् ॥
समस्तं चूर्णितं प्रातर्मिस्काले १ नित्यमाहरेत् ॥ १९४ ॥
सिर्का-युक्तं नरः पथी केसरी संभवेद् ध्रुवम् ॥ १९५॥

अन्यच्च-

कणोषणे यवानी च अनेसूं च पृथक् पृथक् ॥
मिस्काल ३ नितयं ग्राह्यं जीरकं दीप्यको मिसिः ॥ १९६ ॥
दारचीनी च मिस्काल-द्वयं २ भिन्नं प्रमाणतः ॥
संचूर्ण्य मधुना लेह्यं मिस्काले १ ऽह्मुखे नृभिः ॥ १९७॥

किंच-

पथ्या जंगी यवानी च दश १० मिस्काल पिप्पली ॥
मर्जंगोश सुदाव द्वौ २ मिस्काल २ द्वयमानतः ॥ १९८ ॥
सर्वं क्षुण्णं ततो माध्वी द्विगुणा च शिकंजवीं ॥
लेह्यं संसाध्य मिस्काले १ प्रत्यूषेऽन्वहमाचरेत् ॥ १९९ ॥

## दुहन् वर्द रोगन्गुल ।

तद्यथा-

गुलाब-कुसुमं ग्राह्यं वृंतकिंजल्कवर्जितम् ॥
मानं मिस्काल २० विंशत्या शतं १०० तैलं तिलोद्भवम् २००॥
चत्वारिंश ४० द्दिनान्येतद् ग्रीष्मघर्म्मे निधारयेत् ॥
काचपात्रे ततो वासःशुद्धं कार्यक्षमं भवेत् ॥ २०१ ॥
गुलाब सिर्का रोगन्गुल त्रीणि ३ संमिश्र्य लेपनात् ॥
सर्साम रक्तपित्तोत्थां शिरःपीडां नियच्छति ॥ २०२ ॥
सिर्का-संयुक्तलेपेन पामाकंडूनिवर्हणम् ॥
ज्वलनज्वलितस्फोटं दाहसाहम्रनाशनम् ॥ २०३ ॥

दुहन्-बाबूनज, रोगन्बाबूनज ।

टीका-रोगन् बाबूना तर्कीब ॥

---

१ अदेदित्यर्थः ।

बाबूना दश १० मिस्काल तैले पंच ५ गुणे पचेत् ॥
पूर्ववद् ग्रीष्मघर्मेण काचकूप्यां भिषग्वरः ॥ २०४ ॥
मुहल्लिल् मुस्किन द्वंद्वं २ शक्त्योरत्रोऽर्ज्जितं स्मृतम् ॥ २०५॥
वा०—किंच राशा रफेगर्दद—कंपवातघ्नं तैलं मर्दनाऽर्हम् ॥

तद्यथा—

बाबूना—कुसुमं मांसी मस्तगी त्रितयं ३ समम् ॥
अहोरात्रत्रयं भाव्यं तिलतैले भिषग्वरैः ॥ २०६ ॥
सिद्धं समीररोगेषु हितं सर्वत्र योजयेत् ॥
अंदके मस्तगी त्याज्या मर्दनेनाऽनिलाऽपहम् ॥ २०७ ॥
दुहने कि मुकत्तय रीह गर्ली—ज अस्त—वातपीडाहरं तैलम् ।

तद्यथा—

वा०—नागरं मांसी आकारकरभः, खर्दिल् तिर्याक, जातीफलं, ज्योतिष्मती सर्वं समं तिलतैले पेषितं विकृतांगे विलेपयेत् विमर्दयेच्च ॥

दुहन्—करय—रोगन् कद्दू तलख ।

स्वरसोऽलाबुसंभूतः सन् मिस्काल ४०० चतुः शतम् ॥
रोगन्बादाम मिस्काल शतं १०० वह्नौ विपाचयेत् ॥ २०८॥
रूक्षतामुष्णतां शीर्ष्णः क्षीणतां स्वापहीनताम् ॥
भ्रांतिं वांतिं च वैकल्यं मर्दनादपकर्षति ॥ २०९ ॥

दुहन्—वनफ्शा—रोगन्वनफशा ।

टीका—पूर्वोक्तगुणक्रियाऽस्याऽपि किंचिदमातपे सिद्ध्यति ॥

दुहन—आस, रोगन्मूरद ।

शिरोबलप्रदं केश्यं पलितादपि रक्षति ॥ २१० ॥

तद्यथा—

आस वृक्षस्य पत्राणि नवानि समुपाहरेत् ॥
तैलं चतुर्गुणं वह्नौ पक्त्वाऽऽदेयं क्रियाक्षमम् ॥ २११ ॥

तद्यथा—

कुष्ठं १० दश दिरम्—मानं सलीखा च तदर्द्धकम् ॥
घर्म्मपतनमाकारकरभो दिरम ३ त्रयम् ॥ २१२ ॥

जुन्दबेदुस्तर ग्राह्यं फर्फयून पृथक्पृथक् ॥
दिरम २ द्वयमानं च पचेच्छत १०० दिरम्-जले ॥ २१३॥
तृतीयांशं समुद्धृत्य प्रक्षिपेदत्र सी ३० दिरम् ॥
रोगन् जैत तिलोद्भूतं तैलं वा भिषगुत्तमः ॥
पुनः क्काथे पचेत्तैलं सिद्धं शर्माऽऽवहं भवेत् ॥ २१४ ॥

दुहन् यासमीन, रोगन्सुमन् ।

वाक्यम्-सकूत, हिरसरा, जायल्, गर्दानद त्वक्सुस्निग्धं तैलम् ।

तद्यथा-

मालतीकनकनागवल्लरीभार्गवीरसविमर्दितं त्रयम् ॥
सार्षपप्रखरतैलपाचितं शुक्रशोणितमनःशिलाह्वयम् ॥ २१५ ॥

टीका-शुक्रशोणिते-रसेन्द्रदैत्येन्द्रौ ॥

स्पर्शाऽज्ञत्वं त्वचः सुप्तिं मर्दनान्मंक्षु संहरेत् ॥
तस्खीन उज्ब तनुते प्रभावोपचयं चरेत् ॥ २१६ ॥

दुहन्-जकूम । स्नुहीतैलम् ।

टीका-कर्णशूलहरम् ॥

तद्यथा-

जकूम भल्लातकरात्रियुग्मं पुरो यवानी क्रिमिजित्कणा च ॥
विश्वोरुबूकोषणटंकणं च तरखून एते समभागमानाः ॥२१७॥
गोमूत्रपिष्टास्तिलतैलपक्काः स्नेहस्तदीयः श्रवणाऽर्पितः स्यात् ॥
पीडाहरः सूर्यसुताऽर्तिनाशे श्रीकान्तनामस्मरणं यथैव ॥ २१८॥

दवाये कि शहवत अंगेज बेनजीरऽस्त ।

मग्ज तुख्म बिलादर् १० वा मर्कटी बहूमन २ द्वयम् ॥
दिरम्-मितं समादेयं चहल्४०बीस्त२० दश१०क्रमात्२१९॥
मज्जा श्रीफलसम्भूतः प्रियालप्रभवः पुनः ॥
जलूज मग्ज बादाम कुञ्जद् कृष्णाश्च निस्तुषाः ॥ २२० ॥
प्रत्येकं पंज ५ दिरम जातीपत्रफले वरे ॥
देवपुष्पेन्दुकांता च भिन्नं स्याद्दिरम २ द्वयम् ॥ २२१ ॥

मस्तगी दिरमे १० क्षुण्णे सर्पिस्तुर्यांशमात्रपेत ॥
अर्द्धं मधु समः कन्दः संयोज्य सुमुहूर्त्ततः ॥ २२२ ॥
हैमन्तेऽनेहसि प्रायो भोगी रोगी निषेवणात् ॥
प्रभवेत्कामिनीकांतो वातातंकी शमश्नुते ॥ २२३ ॥
मुनइज् मुब्रही शक्तिर्मुकव्वी च मुलय्यन ॥
पार धेनुपयः प्रोक्तं वर्द्ध-दर्पहरः परः ॥ २२४ ॥
मात्रा हफ्त ७ दश १० ख्याता दिरम्-माना यथाबलम् ॥
कन्दर्पदर्पलीलार्थां बेनजीर वरौषधम् ॥ २२५ ॥

टीका-पूर्वश्लोके वा समुच्चयाऽर्थः । बेनजीर-अतुलम् ॥

इति सप्तमो वर्गः ७.

## अथ वर्गोऽष्टमः ८.

### रदीफ जाल ।

#### जअरुर-अस्फरकबीर ।

अंजनं पीतवर्णाभं जलस्रावं रुणद्धि हि ॥ २२६ ॥
अंजरूत वरीक्षीरे भावितं सम्प्रकीर्तितम् ॥
मुरब्बा-नामकं पंज ५ दिरम्-मानं समाहरेत ॥ २२७ ॥
मामीशा दिरम द्वंद्वं २ सिवर् कुंकुममेव च ॥
गुलाब-कुसुमं नीम दिरम्-मात्रं पृथक् क्षिपेत् ॥ २२८ ॥
त्रिगुंजमहिफेनं स्यात्समस्तं श्लक्ष्णचूर्णितम् ॥
नेत्रांजितं घनध्वांतध्वंसमार्त्तंडदीधितिः ॥ २२९ ॥

#### जअरूर-अस्फर सगीर ।

अंजनं लघु पीतं च पृथुकाऽक्षिरुजाऽपहम् ॥ २३० ॥

तद्यथा-

अञ्जरूत मुरब्बा तु पंज ५ मिस्कालमाहरेत ॥
मामीशा च दु २ मिस्काल उभे श्लक्ष्णीकृतेऽञ्जयेत् ॥ २३१ ॥

#### जअरूरे कि कुरह अनरा जायल गर्दानद ।

चूर्णं सदक्षिक्षवपूरणं स्यादनुत्तमैर्वैद्यवरैः कृतं यत् ॥ २३२ ॥

तद्यथा-

शीसुहूरि-क्रमगं शूलं शादनज़् दह् १० दिरम् पृथक् ॥
श्लक्ष्णीकृतांजितं सद्यश्चक्षुषां क्षतपूरणम् ॥
समस्तक्षतसंधानविधाननिपुणं भवेत् ॥ २३३ ॥

अन्यच्च-

इस्मिद्शादनज़् द्वे स्तः पृथक् सी दिरम क्रमात् ॥
सूक्ष्मं पिष्टांजितं चाक्ष्णोः क्षतव्रणरुजापहम् ॥ २३४ ॥

जअरूरे ।

टीका-कि जख्म जराहत चश्मदराफे साजद्-क्षताक्षिकण्डूव्रणवेदनहरम् ॥

कृष्णा हरीतकी पथ्या मामीशा द्वि दिरम् पृथक् ॥
पृथक् श्लक्ष्णीकृतं सर्वमंजितं गुणवत्तरम् ॥ २३५ ॥

जअरूर शादनज ।

सबल् गिज्जत अज़्फान नेत्रयोः संव्यपोहति ॥ २३६ ॥

टीका-पक्ष्मक्लेदहरमंजनमित्यर्थः ॥

तद्यथा-

शादनज़् दश दिरम् १० अंजरूत सित्रसकूतरी ॥
हुज़ुज़मक्कई शिवा कृष्णगुणा काब्ली हरीतकी ॥ २३७ ॥
प्रत्येकं पंज ५ दिरम दिरमे १ कुंकुमं स्मृतम् ॥
पिष्टांजितं नयनयोर्दुःखहृत्सुखकृद्भवेत् ॥ २३८ ॥

जरूरे कि बयाज गुल् चश्म रा बिबुराशद ।

वाक्यम्-अंजनमक्ष्णोः श्वैत्यं पुष्पं चाऽपि प्रतिक्षर्ति क्षुण्णम् ।

तद्यथा-

समुद्रफेनोऽरुणचूडपक्षिणः पक्कांडसारः पृथगाऽऽहरेच्च ॥
शस्त्रो दिरम् पंज ५ मितः सितायाः
संभृष्टतुत्थस्य च शाणभागः ॥ २३९ ॥

इस्फीदाज़् अंजरूत स्याद्द्वयं २ तुर्यं ४ दिरम् पृथक् ॥
दिरमे १ नवसारं च सर्वं संचूर्ण्य चांजयेत् ॥ २४० ॥

इत्यष्टमो वर्गः ८.

# अथ वर्गो नवमः ९.



## रदीफ रे ।

### रोशनाई-तिमिरघ्नमंजनम् ।

शब्कोरी चश्मतारीकी सम्बल् जरब गौरवम् ॥
संसेवनाद्द्रुतं हंति हिमानीं तरणिर्यथा ॥ २४१ ॥

सा यथा-

सिवर्सकूतरी खब्सुल्करे मिस्काल षड्द्वरः ॥
चूरे इरमनी कृष्णाकृष्णं चाऽपि पृथक्पृथक् ॥ २४२ ॥
मिस्काल-त्रितयं ३ ग्राह्यं द्वयं २ जंगार संहरेत् ॥
शादनज् द्वादश १२ मिस्काल-मितं सर्वं विचूर्णितम्॥
पूर्वोक्ताऽऽतंकसंघघ्नमंजितं चक्षुषे हितम् ॥ २४३ ॥

### रुब्ब तुरंज ।

पित्तं विषं तृषं हंति प्राशाल्लेपाच्च दद्रुहृत् ॥
अंजितं चक्षुषः पुष्पं कंडूं श्वैत्यं नियच्छति ॥ २४४ ॥

तद्यथा-

फलपूररसप्रस्थं सुपक्वं मंदवह्निना ॥
तुर्यांशं वाससा शुद्धं तत्र तुल्यां सितां क्षिपेत् ॥ २४५ ॥
पुनः पचेच्च विधिना संहरेन्मधुसन्निभम् ॥
काचे वा राजते स्थाप्यं काले कार्यक्षमं भवेत् ॥ २४६ ॥

### रुब्ब—लीम ।

पक्वाशयद्रविणदं वांतितृट्पित्तखंडनम् ॥
पाचनं गुल्मदमनं मदात्ययकृताऽत्ययम् ॥ २४७ ॥

तद्यथा-

निंबुकानां रसप्रस्थं पचेदग्नौ तदर्द्धकम् ॥
वासःपूतं समाहृत्य पुनः समसितं पचेत् ॥
सिद्धं कार्योपयोगि स्याद्वैद्यवर्य्यैर्विनिर्मितम् ॥ २४८ ॥

टीका—शूलघ्नं च ॥

रुब्ब-अनार मयखुश ।

खुमार-तृष्णाज्वरपित्तदाहं वांतिं प्रशांतिं गमयेच्च सद्यः॥२४९॥

तद्यथा-

मधुरदाडिमबीजभवं रसं कुडवमानमितं विपचेत्सुधीः ॥
चरणभागमुपाहृतमंजसा समविभागसितोपलसंयुतम् ॥ २५० ॥
विपाचितं मंदहिरण्यरेतसा मधुप्रभं सांद्रमनंवसारम् ॥
संसेवितं वर्णबलं प्रसूनचापेषुमुग्रेषुधिमातनोति ॥ २५१ ॥

रुब्ब अनार मयखुश अकसर हामिज ।

काबिज्-पित्तविदाहघ्नं दीपनं पाचनं लघु ॥ २५२ ॥

तद्यथा-

अम्लदाडिमबीजोत्थं रसप्रस्थं पचेद्भिषक् ॥
तुर्यांशमाहरेत्तत्र क्षिपेच्छुद्धां सितां समाम् ॥ २५३ ॥

रुब्ब अनार शीरीं ।

कासं च यक्ष्माणमुरःक्षतं च क्षतोत्थनिष्ठीवनमाशु हंति ॥
विबंधविष्टंभविदाहमोहं ज्वरं च मृत्युंजय आदिदेवः ॥ २५४ ॥

तद्यथा-

स्वादुदाडिमरसं विपाचितं मंदहेतिधरजातवेदसा ॥
तुर्य्यभागपरिशेषकल्पितं तुल्यशुभ्रसितया समं पचेत् ॥ २५५ ॥

रुब्ब बिही ।

विबंधतृड्दाहशिरोऽर्तिमूर्च्छांपित्ताऽस्रवांतिक्षपणेऽविदक्षम्॥२५६॥

तद्यथा-

बिही-रसः सूक्ष्मकृशानुपक्वो ह्यर्द्धोऽवशेषः सितया समेतः ॥
पुनर्विपक्वो गुणवत्तरः स्यात् प्रागुक्तरोगाऽसुररामबाणः ॥ २५७ ॥

रुब्ब-सेव ।

रुब्ब सेव मनसो बलप्रदं काबिज-ज्वरतृषामदांतकम् ॥
वांतिविक्लवजुगुप्सिताऽपहं कासमर्दनसमर्थविक्रमम् ॥ २५८ ॥

तद्यथा-

रुब्ब विज्ञभिषगा सुसाधुना साधितं सकलकर्म्मणि क्षमम् ॥
भेषजं परमतर्पणं त्विदं वैद्यमौलिमुकुटैरुदाहृतम् ॥ २५९ ॥

रुब्ब हब्बुलास ।

दिल् दमाग पचनाशयाय यद्दक्षतां वितरति क्षयाऽपहम् ॥
कासलोहितगतिं मुखोद्गतिं विच्छिनत्ति मनसो भ्रमं नवम् ॥२६०॥
अतिसारमतीसारमुत्क्लेदं च नियच्छति ॥
शूलं कीटविषं चाऽपि मूत्ररोधमथाऽश्मरीम् ॥ २६१ ॥

तद्यथा-

हब्बुलास समुपाहरेन्नवं पाथसि प्रचुरपाचितं भिषक् ॥
तुर्य्य ४ भागमवशेषितं ततस्तत्समानसितया पुनः पचेत् ॥२६२॥

रुब्ब-आलू ।

संज्वरज्वरतृषाप्रशांतिदं शक्तवः स्रंसनमीरितं बुधैः ॥
प्रबलप्रचुराऽर्तिपित्तनुत्तितरां ग्लानिनिरासकारणम् ॥ २६३ ॥

तद्यथा-

रसमालुकसंभवं बुधो विपचेत्तुर्य्यविभागशेषवत् ॥
सितया समया समायुतं भिषगाऽऽर्यो मृदुकृष्णवर्त्मना ॥ २६४ ॥

रुब्ब रीवास ।

अतिसरणमुदन्यां रक्तवेगं रुणद्धि
प्रसभमथ च वांतिं शांतिभावं नयेच्च ॥ २६५ ॥

तद्यथा-

आब रीवास संपाच्यं ग्राह्यमर्द्धाऽवशेषितम् ॥
समानसितया साकं पुनः पाकं समाचरेत् ॥ २६६ ॥

रुब्ब स्याह तूत वरम् हल्क खुनाक रा दफे गर्दानद ।

अर्द्धभागहृतमंजसा पुनस्तुल्य–कंद–सहितं ततः पचेत् ॥२६७॥

रुब्ब जरश्क ।

रक्ताऽतिसारं यकृतश्च दाहं पक्वाशयाऽर्तिं तृषमुल्बणं च ॥२६८॥

टीका–नियच्छतीति शेषः ॥

तद्यथा-

जरश्क-नीरं मृदुचित्रभानुना विपाचितं चांऽघ्रिमिताऽवशेषम् ॥

किंवाऽर्द्धशेषं सितया समेतं स्यात्कार्ययोग्यं पुनरेव पक्कम् ॥ २६९ ॥

इति नवमो वर्गः ९.

---

# अथ वर्गो दशमः १०.

## रदीफ सीन ।

### सफूफ मुसहिल्-रेचनचूर्णम्

कोष्ठेषु संश्लिष्टसमस्तदोषदस्युप्रकर्षस्य निरासचंचु ॥ २७० ॥

तद्यथा-

शुंठी त्रिवृच्छर्करया समाना क्षुण्णांभसा चोष्णगुणेन पीता ॥

शीताऽऽधिकत्वं तनुते निरस्तं ज्वरं समीरोत्थकफोत्थवेगम् २७१ ॥

### सफूफे-दीगर कि हमी अमल कुनद ।

टीका-अन्यच्चूर्णं पूर्वोक्तगुणमेव ॥

यथा-

त्रिवृल्लवणसंयुक्ता सितया संगताऽथवा ॥

पीता शीतांभसा पुंसां पाचनी रेचनी परा ॥ २७२ ॥

### सफूफ-हलेलय-पथ्याचूर्णम् ।

पित्तं कफं निक्रिस-नामरोगं हन्याच्चिरोत्थं इरकुन्निसा च २७३

तद्यथा-

सूरंजा मिसरी हफ्त ७ दिरम्-मानाऽथ चेतकी ॥

महती हफ्त ७ मिस्काल दश १० मिस्काल-मानतः २७४

सनाय खूब संग्राह्या गुलाब--कुसुमं ततः ॥

अर्द्ध पोस्तकिवर् वह्निः ३ संख्यमिस्काल--मानतः ॥२७५॥

हिना-पत्रं च बादाम-पत्रं च दिरम ३ त्रयम् ॥

कुंकुमं दिरमे १ ख्यातं कन्द शस्त ६० दिरम् भवेत् ॥२७६॥

सक्मूनियां च मिस्काले १ सर्वं संचूर्ण्य धारयेत ॥
दिरम् एकं द्वयं वाऽपि पिबेच्छिशिरवारिणा ॥ २७७ ॥

सफूफ-सूरंजा ।

वाक्यम्—खसूस दरमालजे बजेमुफासिल वगायः यत् नफे-रसानद्—विशेषतः संधिपीडाप्रतीकारे गुणप्रदम् ॥

तद्यथा—

सूरंजां दश १० मिस्काल सनाय च तदर्द्धतः ॥
त्रिवृत्तथैव ५ बादाम सि ३ दिरम् कन्द सी ३० दिरम् २७८
कुंकुमं दिरमे १ ग्राह्यं मह्मूदा दिरम २ द्वयम् ॥
चूर्णितं नीम मिस्काल निषेव्यं शीतलांबुना ॥ २७९ ॥

किंच—

सूरंजां मिसरी कन्द माने १० दश दिरम्—मितौ ॥
सनाय मग्जबादाम द्वे भिन्ने पंच ५ संख्यया ॥ २८० ॥
सक्मूनियां कुंकुमं च दिरम—ऽर्द्धमुभे पृथक् ॥
बिडालपदकं प्रातः शीतपुष्करयुक्पिबेत् ॥ २८१ ॥

वाक्यम्—सर्वसन्धिपीडानिबर्हणं शर्मावहं च ।

तद्यथा—

सनाय सप्त ७ दिरम सूरंजां च सितोपलः ॥
प्रत्येकं दिग् १० दिरम्—मानं कुंकुमं दश १० रक्तिकम् ॥
दिरमे १ हिमपानीयाऽनुपीतं वेदनाऽपहम् ॥ २८२ ॥

सफूफे कि आतशक् रा दफे गर्दानद ।

तद्यथा—

हैयंगवीनाक्तमदेत् फिरंग—रोगग्रहाऽऽर्तो दिरम—द्वयं २ ना ॥
धात्रीफलाढ्यं पिचुमन्दपत्रचूर्णं ध्रुवं आतशक—प्रणाशि २८३॥

सफूफ—तीन—मृत्स्नाचूर्णम् ।

वाक्यम्—सहज याने रेश रोदहा रा दफे कुनद—अन्त्रक्षतं नाम क्षतजष्ठीवनं च निराकरोति ।

तद्यथा–

तुरूशक तुख्मरेहाँ च कनौचा–बीजमेव च ॥
कतूना–बीजमिति च तुर्यं भृष्टं समाचरेत् ॥ २८४ ॥
दिरम्–दश १० मितं भिन्नमक्षुण्णं च यथास्थितम् ॥
गोधूमसारः संभृष्टः समगवी च भर्जितः ॥ २८५ ॥
इर्मनी गिल् तवाशीर दश १० मिस्काल–संमिताः ॥
चूर्णिता बीजसंमिश्राः संगृह्णीयाद्भिषग्वरः ॥ २८६ ॥
शाणयुग्ममुषसि प्रसेवितं तुख्म मूरद्–विभावितांभसा ॥२८७॥

सफूफ बजूर–बीजचूर्णम् ।

आमाशयाद्याशयमार्जनं चाऽभ्यन्तर्गतां दारुणवेदनां च ॥
निराकरोति प्रसभं क्षणेन क्षुण्णं हि निःक्षुण्णतया मनुष्यैः २८८॥

तद्यथा–

कराविया अनेसूं च जीरकं दीप्यकस्तथा ॥
सूक्ष्मैला तुख्म खुर्फा च यवानी सि ३ दिरम् पृथक्॥२८९॥
वृन्दारकप्रसूनं च नागरं चपलापि च ॥
प्रभिन्नं दिरम–२ द्वंद्वं सिता दिरम २० विंशतिः ॥ २९० ॥
दु २ दिरम् प्रातरश्नीयान्ना मिसिस्स्वेदवारिणा ॥
गुलाब–स्वेदः सेव्यो वा कोष्णवीर्येण नित्यशः ॥ २९१ ॥

सफूफ–शबखार ।

**टीका**–रजनीमित्र चूर्णम् ॥

अभया च शिवा जंगी उभे कर्षमिते पृथक् ॥
मांसी दव्वालक्कमिति देवपुष्पोपकुंचिके ॥ २९२ ॥
जरंबाद्–वधूजातिर्मेचकं जीरकं तथा ॥
गुलाब–कुसुमं शोणं पोदीना अवलः पुनः ॥ २९३ ॥
पृथक्कर्षार्द्धमानेन ग्राह्यं गारयकूनऽपि ॥
अनेसूं दारचीनी च द्वे २ माष ३ त्रयसम्मिते ॥ २९४ ॥

मधुकं दीपकश्चेति द्वयं शाणोऽर्द्धमानकम् ॥
शैलुश्च कुमुदं कोलं पृथक्टंकद्वयं स्मृतम् ॥ २९५ ॥
सनाय अर्द्धमानेन समस्तेभ्यः समाहरेत् ॥
संचूर्ण्यं तुल्यसितया संयोज्य भिषजां वरः ॥ २९६ ॥
शाणोन्मितं क्षौद्रसमेतमद्यादोषत्रयस्यापि चतुष्टयस्य ॥
निरासमिच्छन्मनुजः क्षयी च श्वासी च कासी च जलोदरी च ॥
अजीर्णहृत्कोष्ण-गुलाब-युक्तं तथा विषूचीकदनं करोति २९७

सफूफ-किंशफा व रमद कूकऽस्त।

टीका-राजयक्ष्मणेऽतिहितम् ॥

तद्यथा-

मुक्ताविद्रुममाणिक्यं सर्वैक्यं कर्षसम्मितम् ॥
कर्षत्रयं तु गोक्षीरी सूक्ष्मैला स्यात्तदर्द्धकम् ॥ २९८ ॥
तदर्द्धं हेमपत्राणि तावदम्बर एव च ॥
कर्षैकं राजतानि स्युः दारचीनी तथैव हि ॥ २९९ ॥
शशी कृष्णा च मिस्काले १ चूर्णितं सकलं ततः ॥
सार्द्धप्रस्थमिते नीरे गुलाब-प्रभवे पुनः ॥ ३०० ॥
वेदमुश्क-द्रवे मर्द्य तदर्द्धं शोधयेच्छनैः ॥
कन्द तत्समभानेन विमिश्र्यैकत्र कारयेत् ॥ ३०१ ॥
अश्नीयाद्विरमे १ वेदमुश्क-नीरे प्रगे नरः ॥
अनार रुब्ब-योगेन किंवा पूर्वोक्तरोगहृत् ॥ ३०२ ॥

सफूफे कि लागर-रा फर्बेह गर्दानद।

टीका-तनुपीवरत्वकरणं ज्वरहरणं च महौषधम् ॥

तद्यथा-

क्षीरोषिताऽर्जुनगुणं हरिमन्थचूर्णं
पंचादशा १५ क्षपरिमाणमितं प्रदेयम् ॥
त्रिंशन्मितं च सिततण्डुलशुद्धचूर्णं
गोधूमसार इति षष्टि ६० मितं प्रयोज्यम् ॥ ३०३ ॥

मग्ज–बादाम संग्राह्यत्रिंश ३० त्संख्याप्रसाधितः ॥
खराश्वा सी ३० दिरम् शुभ्रं द्विगुणा स्यात्सितोपला ॥
धारोष्णधेनुपयसा सायं प्रातरदेन्नरः ॥ ३०४ ॥

इति दशमो वर्गः १०.

# अथ वर्ग एकादशः ११.

## रदीफ शीन।

शऊते–कि अजदुमाग, कि रमह रा खारिश रा इखराज–कुनद।
टीका–नस्य शिरः किन्तु निर्वहणं स्यात् ॥

तद्यथा–

पुन्नाग–दव्वालक–जन्तुशत्रु शटी च गोरोचनया समेता ॥
समानमानैव विचूर्ण्य सूक्ष्मकलं पं ५ गुंजामितमाहरेच्च ॥ ३०५ ॥
आदौ हैयंगवीनेन माय ३ त्रयमितेन वा ॥
सम्मथ्य नावनं कुर्याद्दिनत्रयमनन्यधीः ॥ ३०६ ॥
अह्नस्तृतीयादथ सार्द्धमानं विवर्द्धयेत्प्रत्यहमौषधं च ॥
तथैव गव्यं नवनीतमग्र्यमेवं विधेयं किल सप्तरात्रम् ॥ ३०७ ॥
वरां च मधुसर्पिर्भ्यामश्नीयादनिशं नरः ॥
प्रयोगराजः सप्ताहादुत्तमांगं विमार्जयेत ॥ ३०८ ॥

शऊते–कि सुद्दे दमाग बुकुशायद होश बहाल गर्दानद।
टीका–नावन शिरःस्रोतोविमोक्षण सज्ञाप्रबोधन च ॥

तद्यथा–

मर्जंगोश–भवं वारि चुकुन्दर–भवं तथा ॥
सप्त ७ मिस्काल आदेयं मूत्रं क्रामेलकं पुनः ॥ ३०९ ॥
छायाशुष्कं विधायादौ ततः संयोजयेत्त्रयम् ॥
कवोष्णं नसि विन्यस्तं तेजोवत्स्यात्तमोनुदम् ॥ ३१० ॥

---

१ पज।

शर्बत् लीमू ।

टीका—निंबुकस्येत्यर्थः ॥

निसर्गेण समं पित्तशमनं दीपनं लघु ॥
हंति तृष्णां ज्वरोत्क्लेदं वांतिं च शमयेद् ध्रुवम् ॥ ३११ ॥

तद्यथा—

निंबुकस्वरसः पाच्यस्तुर्य ४ शेषं समाहृतः ॥
चतुर्गुणसितायुक्तः सांद्रः स्वादुकषायकः ॥
दश १० मिस्काल मात्राऽस्य रोगिणो हितकारिणी ॥ ३१२ ॥

शर्बते—लीमू सफर्जली ।

पक्काशयस्य शिरसश्च बलप्रदोऽयमुत्क्लेदवांतिशमनो ज्वरनाशनश्च॥ ३१३॥

स यथा—

संपाच्य निंबूकरसं बिही—रसं तुर्यांशशेषं समुपाहरेच्च ॥
पुनर्विपाच्यं सितया समेतं कार्यावहं स्याद्गुणवत्तरं हि ॥ ३१४ ॥

शर्बत्—नारंज ।

ऐरावतानां स्वरसं विपाच्य तुर्यांशशेषं विधिना विधेयम् ॥
शुभ्रां सितां तेन समां विमिश्र्य पुनश्च पक्त्वा भिषगायमुख्यैः ॥
पित्तोत्थकासे ज्वरसंज्वरे च देयं मनस्तोषविवर्द्धनाय ॥ ३१५ ॥

शर्बत्—रीवास ।

संग्राहि वांतेः शमनं बलप्रदं हृदश्च शीर्ष्णोऽपि निरस्तदोषम् ३१६

तद्यथा—

रीवास—वारि विपचेच्च किलाऽर्द्धशेषं
संगृह्य तत्समसितायुतमाशु पाच्यम् ॥
तृष्णाऽपहं निगदितं बलवर्द्धनं च
धातुप्रकर्षमनिशं तनुते प्रकामम् ॥ ३१७ ॥

शर्बत् जरश्क ।

पक्काशयस्य यकृतश्च बलावहं स्यादु-
त्क्लेदवांतिशमनं रुधिराऽतिसारे ॥

आमातिसाररुजि चापि सुधासमानं
प्राचीनवैद्यगुरुभिर्गदितं प्रशस्तम् ॥ ३१८ ॥

तद्यथा-

जरश्क-सभवं वारि पक्वमर्द्धाऽवशेषितम् ॥
सितया सितया युक्तं पुनः पक्वं गुणोत्तरम् ॥ ३१९ ॥

शर्बत-जरश्क, पोदीना वाली ।

मनसो यकृतो बलावहं पचनाऽगारसहःप्रदायकम् ॥
ग्रहणीहरणं च दीपनं परमाह्लादकरं च शूलभित् ॥
वमथुं च जुगुप्सितं हरेत्प्रचुरक्षुत्करमीरितं बुधैः ॥ ३२० ॥

तद्यथा-

शुभ्रः कन्दः-समादेयः सन् मिस्काल ४०० चतुःशतम् ॥
जरश्क--वारि संग्राह्यं शत १०० मिस्काल-मानतः ॥
पोदीना--वारि संपाच्यं तदर्द्धं सिद्धमाचरेत् ॥ ३२१ ॥

शर्बत्-तमर-हिन्दी ।

पित्तस्य वांतेश्च जुगुप्सितस्य पक्वाशयस्योष्मनिबर्हणं च ॥
समर्हणं सद्द्रविणप्रदं च वर्णप्रदं शन्तनुते च सत्यम् ॥ ३२२ ॥

तद्यथा-

पक्वाऽम्लिका पंच ५-पलं विपाच्या चतुर्गुणे वारिणि कूपजाते ॥
अर्द्धावशिष्टां द्विगुणां सितां च संयोज्य पाकात्पुनरेव पक्वम् ॥ ३२३ ॥

शर्बत-आलू ।

ज्वरसंज्वरसंहृतौ क्षमं दहनं पित्तकृतं तथा तृषम् ॥
निहिनस्ति परं सुतर्पणं भवति स्रंसनमाशु कोष्ठतः ॥ ३२४ ॥

तद्यथा-

आब आलू दश १० पलं पचेन्मंदेन वह्निना ॥
अर्द्धशेषं द्विगुणया सितया संयुतं पुनः ॥ ३२५ ॥

टीका-पचेदित्यर्थः ॥

शर्बत् हुमाज याने तुरंजः ।

उदन्यां वमथुं पित्तं हरेद्धृद्रोगमुल्वणम् ॥
मन्दाऽग्निमरुचिं सद्यो ज्वरं वा शीतपूर्वकम् ॥ ३२६ ॥

तद्यथा-

बीजपूररसो ग्राह्यो मिस्काल-द्विशतं वरः ॥
त्रिपक्वोऽर्द्धावशेषश्च कन्द-द्विगुणपाकयुक् ॥ ३२७ ॥

शर्बत्-पोस्त-तुरंज ।

टीका-बीजपूरफलत्वच इत्यर्थः । दफे सन्निपात याने जहरहा कुनद समस्तविषदोषघ्नमिति ॥

तद्यथा-

शतं १०० मिस्काल-मानं स्यात्फलपूरांतरत्वचः ॥
पक्त्वा चतुर्गुणे नीरेऽर्द्धशिष्टं तत्समाहरेत् ॥ ३२८ ॥
सितोपलं द्विगुणितं क्षिप्त्वा तत्र पुनः क्षिपेत् ॥
मात्रा हिताय नुर्देया यथाकालवयोबलम् ॥ ३२९ ॥

शर्बत-अंबरबारीस ।

वाक्यम्-कासं प्रतिश्यायमपोहतीदम् ।

तद्यथा-

मिस्काल-द्विशतं २०० कन्द अम्बर् बारीस-वारि तु ॥
चतुर्थांशपरीपाकः प्राग्वत्संकेतितो बुधैः ॥ ३३० ॥

शर्बत्-अनार तुर्श ।

पित्तस्य शांतिं दहनस्य धाम्नो बलावहं शुक्करहृद्रुजाऽऽहम् ॥

टीका-करोतीति शेषः ॥

तद्यथा-

मिस्काल-३०० त्रिशतं कन्द अम्लदाडिमवारि च ॥
वह्निना पूर्ववत्साध्यं क्रियातत्परमानवैः ॥ ३३१ ॥

शर्बत्-अनार मय खुश-पोदीना वागी ।

ग्रहण्यतीसारविसूचिकाघ्नं शुद्दीपनं पाचनमामदुष्टेः ॥ ३३२ ॥

---

१ मनुष्यस्य ।

तद्यथा—

मिस्काल ४०० तुर्यशतमानमिता सिता
स्यादम्भोऽम्लमिष्टरसदाडिमसम्भवं च ॥
तुर्यांशकं च समुकृष्य ततश्च तस्मिन्
नानायजातकमलं च ततोऽर्द्धमुक्तम् ॥ ३३३ ॥

शर्बत—सेव ।

हृद्रोगहृन्मानसपोषकं च संग्राहि रेतः कुसुमेषुदीपनम् ॥ ३३४ ॥

तद्यथा—

अस्पहानी सेव शीरीं शतं १०० मिस्काल तद्रसः ॥
पक्वोऽर्द्धभागं पाच्यः स्यात् कन्द—द्विगुणसंयुतः ॥ ३३५ ॥

शर्बत—सेव संदल ।

हृत्पक्वधाम्नो बलदं रुजं च हृद्रोगमुत्क्लेदमपाकरोति ॥
पित्ताऽस्त्ररोगं विविधं ज्वरं च प्रसूनचापोत्सववर्द्धनं स्यात् ॥ ३३६ ॥

तद्यथा—

हरिचंदनस्य विशदं सुचूर्णकं विहितं तु सोहन—निभेन हेतिना ॥
परिमाणतो दश दिरम् १० दिवानिशं त्रिगुणेंबुनि प्रचुरभावितं भवेत् ॥ ३३७ ॥

मिस्काल ३०० त्रिशतं कंद सेव मिस्काल ७० सप्ततिः ॥

टीका—सेव—रस इत्यर्थः ॥

गुलाब सी ३० दिरम् शेषं श्रीखंडजलमुत्तमम् ॥ ३३८ ॥
हिरण्यरेतसाऽक्रूरवह्निना पक्वमाचरेत् ॥
दश १० मिस्काल अथवा दिग् १० दिरम्—मात्रया सुधा ३३९

शर्बत बिही ।

कोष्ठस्य वह्नेर्हृदयस्य शीर्णः शर्मावहं ग्राहि च वांतिनाशि ॥
उत्क्लेदसंहारि वरं गणे स्वे कासाऽस्त्रपित्तघ्नमुशंति वैद्याः ॥ ३४० ॥

तद्यथा—

पिंजाह ९० मिस्काल बिही—रसः स्यात्पक्वोऽर्द्धभागः सितया समेतः ॥

त्रैगुण्यभाजा पुनरेव पक्वाऽऽयुर्वेदविद्योऽथ रुजि प्रयुंज्यात् ३४१॥

शर्बत-अमरूद।

पूर्वोक्तरोगघ्नमुरःक्षतघ्नं कासघ्नमप्याशु चिकित्सितोक्तम् ॥

तद्यथा-

पिंजाह ५० मिस्काल मितं प्रदेयम् अम्रूद-नीरं मृदुचित्रभानौ ॥
पाच्यं सिता तुर्यगुणा प्रदेया पुनर्विपक्वं सुधया समानम् ॥ ३४२ ॥

शर्बत-हव्वलास।

जाय दिल् जठरवह्निमंदतां कृच्छ्रकासरुधिरोद्गमं विषम् ॥
वृश्चिकाद्यवनिसंभवं तथा ग्राहि बस्तिरुजमुग्रवेदनाम् ॥ ३४३ ॥

टीका-नियच्छतीति शेषः ॥

तद्यथा।

तुख्ममूरद मिस्काल-शतकं १०० तु चतुर्गुणे ॥
नीरे नरः पचेदर्द्धं मिस्काल-त्रिशतं ३०० सिता ॥ ३४४ ॥

शर्बत्-मेवे तर।

टीका-अनेकफलरससंभव इत्यर्थः ॥

हृत्पक्वाशयपाटवं वितरति ग्लानिं वमिं संज्वरं
पित्तं हंति तृषं च रक्तविकृतिं संमार्जयत्यद्भुतम् ॥
वर्ण्यं तर्पणपोषणं द्रविणदं पुष्पेषुसंदीपनं
गर्भिण्या अपि गर्भरक्षणकरं श्रेष्ठं समस्तेषु च ॥ ३४५ ॥

तद्यथा।

सेव अम्रूद जरक मधुराम्लं च दाडिमम् ॥
मधुरं च तथाऽम्लं च त्रिधा द्राक्षा त्रिधाऽपि च ॥
एषां रसाः पृथग्ग्राह्याः सी ३० मिस्काल-प्रमाणतः॥३४६॥
पाकाऽर्द्धशेषाः सितया समेता भागैश्चतुर्भिर्युतया विपक्वाः ॥
ततश्च निंबूकरसो गुलाब-श्रीखण्डवारि त्रितयं क्रमेण ॥३४७॥
एकैकवृद्ध्या संयोज्य पुनः पक्वा समाहरेत् ॥ ३४८ ॥

टीका-चन्दनाम्बु प्राग्वत्साधितम् ॥

शर्बत-लिसानुल्हमल।

रक्ताऽतिसारं वमथुं तथाऽसृक्सम्भूवमत्युग्रतमं जयेच्च ॥ ३४९ ॥

तद्यथा।

रसो लिसानुल्हमल मिस्काल् पंचाश ५० दाहरेत् ॥
पाकाऽर्द्धशेषं संगृह्य सितां त्रिगुणितां क्षिपेत ॥ ३५० ॥

शर्बत-अंजुबार।

वाक्यम्-पूर्वोक्तगुणप्रदोऽपि।

तद्यथा-

अंजुबार-समादेयं हफ्त ७ मिस्काल-संमितम् ॥
प्रस्थेंभसि पचेदेतत्सितां दशगुणां क्षिपेत् ॥ ३५१ ॥
प्राग्वत्संसिद्धपाकः स्यात्ततः कार्ये प्रयोजयेत् ॥ ३५२ ॥

शर्बत-उन्नाव।

माशरा जदरी हस्बे खलय् पह्ल्-विनाशनम् ॥
कासघ्नमपि निर्दिष्टं भवेद्रक्तप्रसादनम् ॥ ३५३ ॥

टीका-माशरा-मुखोपरि रक्ताः सदाहपिडिकाः। जदरी-स्वल्पा शीतला। हस्बे महती शीतला। खलयपहलू-पार्श्वतोदः ॥

तद्यथा-

उन्नाव शत १०० मिस्काल नीरे तुर्यगुणे पचेत् ॥
अर्द्धाऽवशिष्टे त्रिगुणां सितां त्यक्त्वा पचेत्पुनः ॥ ३५४ ॥

शर्बत-बनफ्शा।

जातुल्जंब-विकारघ्नं जातुलरीये-निबर्हणम् ॥
दर्द गुर्दे मसाने रा दफे गर्दानद क्षणात् ॥ ३५५ ॥
कृच्छ्ररोगहरं भेदि कासघ्नं स्वरभेदनुत ॥ ३५६ ॥

टीका-जातुल्जंब-कोष्ठातःपार्श्वसमीपे सवेदनः श्वयथुः। जातुलरीये-फुप्फुसस्योष्णशोथः दर्द गुर्दे मसाने-वृक्कवस्त्योः पीडा ॥

विधिर्यथा।

गुल्बनफ्शा शत १०० दिरम् दिरम् तुर्य ४ शतेंभसि ॥

---

१ पचेदिति वाक्योक्तिः।

अर्द्धाऽवशिष्टं दिरम-त्रिशतं ३०० कन्द-निक्षिपेत् ॥ ३५७ ॥

शर्बत नीलोफर ।

वाक्यम्-हस्बे जदरी सुर्फे खुष्की दमाग बेखावी रा दफे कुनद ।

शीतलाद्व्यकासशीर्षरूक्षतास्वापात्ययाऽत्ययं करोति ॥ ३५८ ॥

तद्यथा-

गुल् नीलोफर् दर्यायी मिस्काल् पंचाश ५० दाहरेत् ॥
पक्त्वा चतुर्गुणे नीरे ग्राह्यमर्द्धोऽवशेषितम् ॥
सितां चतुर्गुणां तत्र प्रक्षिप्य विपचेद्भिषक् ॥ ३५९ ॥

शर्बत-काहजवां ।

वाक्यम्-दिल् रा कुव्वत दिहद तबहुश याने दीवानगी सौदावी रा जायलगर्दानद-हृदो द्रविणप्रदम् ॥

सौदा-संजातचित्तस्य विक्षेपभ्रमनाशनम् ॥ ३६० ॥

तद्यथा-

रसः काहजबां-भूतः शत १०० मिस्काल-मानतः ॥
सी ३० मिस्काल गुलाब स्यादुभयं वह्निना पचेत् ॥३६१॥
ततः कंद-जलं तावत्त्यक्त्वा तत्र विनिक्षिपेत् ॥

टीका-पुनः पचेदित्यर्थः ॥

वाक्यम्-मात्रा दश १० मिस्काल ॥

प्रकारोऽपरः ।

शुष्क-काहजबां ग्राह्या चहल् मिस्काल-मानतः ॥
साऽशीतिद्विशते २८० पाच्या गुलाब-सलिले नरैः ॥ ३६२ ॥
अर्द्धशेषं समादाय सितां श्वेतां भिषग्वरः ॥
तत्र मिस्काल-पंचाश ५० त्क्षिप्त्वा युक्त्या पचेत्पुनः ॥३६३ ॥

वा०-मात्रा १० दिरम् ॥

शर्बत-बादरजंबूया ।

सौदा-वातविकारघ्नं हृदयस्य बलाऽऽवहम् ॥ ३६४ ॥

तद्यथा-

वाक्यम्-बादरजंब्रूया सद १०० मिस्काल चहार सद
४०० मिस्काल-सम्मितंभसि पक्त्वाऽर्द्धशेषं समाहृत्य ॥
सेसद ३०० मिस्काल कंद त्यक्त्वा युक्त्या पुनः पचेत् ॥ ३६५ ॥

शर्बत-खशखाश ।

नज्ला जुकाम कासघ्नं निद्रानाशविनाशनम् ॥ ३६६ ॥

तद्यथा-

पोस्त खशखाश पिंजाह ५० मिस्काल-मितमाहरेत् ॥
मंदं चतुर्गुणे नीरे पक्त्वाऽर्द्धं समुपाहरेत ॥ ३६७ ॥
कंद त्रिशत ३०० मिस्काल संयोज्य विपचेत्पुनः ॥
दश १० मिस्काल मात्रा स्याद्यथाकालवयोऽथवा ॥ ३६८ ॥

शर्बत-जूफा ।

श्वासं कासं बलासोत्थां वक्षःफुप्फुसवेदनाम् ॥
दोषान्संशोध्य नैरुज्यं कुर्याद्धंतीव वासकम् ॥ ३६९ ॥

तद्यथा-

राजहंस-दलं जूफा बेखसोसन एव च ॥
प्रत्येकं हफ्स ७ दिरम संग्राह्यं भिषजां वरैः ॥ ३७० ॥
बनफ्शा तुरूम खब्बाजी खत्मी पंज ५ दिरम् पृथक् ॥
श्लेष्मातकफलं द्राक्षाः पंचाशत् ५० संख्यया समाः ॥ ३७१ ॥
अंजीर दश १० संख्याकाः सर्वं संक्षुण्य वारिणि ॥
मिस्काल तुर्य ४०० शतके पक्त्वार्द्धं समुपाहरेत ॥ ३७२ ॥
सेसद ३०० मिस्काल कन्द-स्य सम्पाच्यैवमुपक्रमेत् ॥ ३७३ ॥

शर्बत्-बर्द मुकर्रः इखराज सफरा कुनद गिब्बदायरे लाजम्
याने तबनौबत् राजायल गर्दानद ।

**टीका**-तृतीयकादिज्वरं नित्यज्वरं च विनाशयेदित्यर्थः । तिश्नगी निशानद-पिपासां प्रशमयेत् ॥

तद्यथा-

गुलाब-कुसुमं वृन्तकिंजल्करहितं हरेत् ॥
प्रस्थं चतुर्गुणे नीरे तावत्पाच्यं सिताभवे ॥ ३७४ ॥
वासःशुद्धे जले तस्मिन्नवं पुष्पं नियोजयेत् ॥
पुनः पक्त्वा सिंत त्यक्त्वा मुहुः शोणं नवं क्षिपेत् ॥ ३७५ ॥
सप्तकृत्व ७ इदं कार्यं ततः कन्द-द्विभागयुक् ॥
तच्छृतेन पुनः पाकसंपन्नं क्लमवारणम् ॥ ३७६ ॥

शर्बत-दीनार ।

यकृदूष्मप्रशमनं जातुल्जंब-निषूदनम् ॥
पिपासाशमनं सुयुल्किनिया-ध्वंसनं सरम् ॥ ३७७ ॥
वाक्यम्-इस्तिस्का-दलनं च ।

तद्यथा-

गुलाब कासनी चेति द्वयं दिरम-२० विंशतिः ॥
आर्द्राऽऽदेया वैद्यवर्यैः सी ३० दिरम् कासनी-जटा ॥३७८॥
कोही काहजबां नीलोफर्दर्यायी पृथग्दश १० ॥
दिरम् कसूम-बीजं तु दिरम्-पंज ५-मितं भवेत् ॥ ३७९ ॥
अनेसूं द्वि २ दिरम् सर्वं नीरे पाच्यं चतुःशते ॥
मिस्काल-प्रमिते ह्यर्द्धे ग्राह्यं तत्र सितां क्षिपेत् ॥ ३८० ॥
मिस्काल-त्रिशतं ३०० शुभ्रामभ्राभां पाचयेत् सुधीः ॥
रेवन्दचीनी-चूर्णं तु पंज ५ मिस्काल-सम्मितम् ॥ ३८१ ॥
द्विगुणक्षौद्रसंयुक्तं त्यजेत्पूर्वश्रृते भिषक् ॥
एवं सिद्धं कियत्कालं विकारेषु प्रयोजयेत् ॥ ३८२ ॥
हफ्त ७ मिस्काल मात्राऽस्य गुलाब-द्रवसंयुतम् ॥
पिबेत्पीयूषसदृशं रसे च गुणकर्म्मणि ॥ ३८३ ॥

शर्बत-बजूरी बारिद ।

सुद्दे कुशा-उदन्याघ्नं मूत्राऽऽघातविघातकृत् ॥
इस्तिस्का-ज्वरसन्तापशमनं शोधनं हृदः ॥ ३८४ ॥

तद्यथा-

शीर्णवृन्तभवं बीजं कासनी-बीजमेव च ॥
त्रपुसैर्वारुबीजं च भिन्नं बाण-५ दिरम् भवेत् ॥ ३८५ ॥
जटात्वक् कासनी-भूता दिग् १० दिरम्-प्रमिता कृता ॥
मिस्काल तुर्य्यं ४०० शतके नीरे पक्काऽर्द्धमाहरेत् ॥ ३८६ ॥
मिस्काल त्रिशतं ३०० कंद-क्षिपेत्किंवाऽर्ज्जुनां सिताम् ३८७

टीका-मात्रा दिरम् १० ॥

शर्बत्- शिकंजवी बजूरी वारिद याने सर्द।

सुद्दे कुशा-पित्तभवज्वरघ्नम् इदरार् मूत्रस्य करोति सद्यः ॥३८८॥

तद्यथा-

पूर्वोक्तहिमबीजानां चतुष्टयमुपाहरेत् ॥
पक्का चांभसि मंदेन वह्निनाऽऽदेयमर्द्धकम् ॥ ३८९ ॥
सिर्का देयस्तुरीयांशो अंगूरी-द्विगुणा सिता ॥
सर्वमेकत्र संपाच्यं मात्रया कार्यकृद्भवेत् ॥ ३९० ॥

शर्बत्-बजूरी-हार ।

टीका-याने गरम् सुद्दे जिगर मादा बुकुशायद्-यकृत्पक्वाशययोः परं रोधहरम् । इदरार बोलु कुनद मूत्ररेचनम् । इस्तिस्कारा जायल् गर्दानद-जठराऽऽमयनिवारणम् ॥

तद्यथा-

किवर् शताह्वा च तथाऽजमोदा
तरोर्जटात्वक् त्रितयं ३ समेत्य ॥
बीजानि चाप्यत्र हरेत्त्रयाणा ३ संक्षुण्य
तत्-पंज ५ दिरम् पृथक् स्यात् ॥ ३९१ ॥
नीरेऽथ मिस्काल चतुःशते ४०० ऽदः
पक्काऽर्धमादाय सितां च तत्र ॥
मिस्काल सेसद् १३०० परमाऽवदानां
विपाच्य मिस्काल दशैव १० मात्रा ॥ ३९२ ॥

शर्बत्-शिकंजवीं बजूरी गरम् ।

इस्तिस्का-नाशनं पक्काशयाद्दोषविशोधनम् ॥

बीजत्रयं च पूर्वोक्तं द्विगुणो वारिणि श्रुतम् ॥
तुर्यांशसितया युक्तम् अंगूरी-सिरका-प्लुतम् ॥ ३९३ ॥
मंदं विपाच्य संसेव्यं मात्रया हितमिच्छता ॥ ३९४ ॥

शर्बत-शिकंजवीं-सफर्जली ।

वा०-जाफ दिल् दमाग मादारा दफेकुनद-कय गशियान वाज दारद-अयमर्थः ॥

क्षैण्यं च वैकल्यमुरुस्वशक्त्या शीर्ष्णो हृदश्चाऽपि च पक्वधाम्नः ॥
हिनस्ति वांतिं च जुगुप्सितं च सुदर्शनं वा दनुजेंद्रवृन्दम् ॥ ३९५॥

टीका-इवाऽर्थे वाशब्दः ॥

तद्यथा-

मिस्काल-द्विशतं २०० कंद-तुर्यांश ५० श्च बिही-रसः ॥
उभयं विधिना पाच्यं अंगूरी सिरकाऽपि च ॥ ३९६ ॥
मिक्दार हाजत त्याज्यः साधयेत्पूर्ववद्भिषक् ॥ ३९७ ॥
स्वाद्वम्लदाडिमरसं बिही-स्थाने नियोजयेत् ॥
शर्बत् शिकंजवीं नाम्ना रुम्मानी तेन कीर्तितम् ॥ ३९८ ॥

शयाफ आला ।

जरब् सबल् खारिश वर्ष्मरोगान् क्षणेन सर्वार्तिकरान्हिनस्ति ३९९

तद्यथा-

क्षालितस्तुत्थको ग्राह्यो १० दश-मिस्काल-संमितः ॥
पीता हरीतकी चाऽपि समग्अवी पृथक्पृथक् ॥ ४०० ॥
पंज ५ मिस्काल विश्वं तु सि ३ मिस्काल उदाहृतम् ॥
रसांजनं त्रियामा च भिन्नं मिस्काल २ युग्मकम् ॥ ४०१ ॥
प्रत्येकं चाऽपि मिस्काले १ मामीशा कुंकुमं वरम् ॥
सर्वं सूक्ष्मं रसे द्राक्षाभवे पिष्टं प्रलेपितम् ॥ ४०२ ॥
तेन तूलं हशोधार्यं स शयाफ इति स्मृतः ॥ ४०३ ॥

शयाफ आवार ।

वाक्यम्-कि कुरह चश्म रा नफे रसानद-नेत्रक्षते गुणाऽऽवहम् ।

टीका-स यथा ॥

तरकीबवाक्यम्—नागभस्म अस्फीदाज समगवी कतीरा नि-शास्ता प्रत्येकं ७ हफ्त मिस्काल चरणायुधांडद्रवेण तूलाक्तः शयाफ विधेयः।

शयाफ अह्मर।

वाक्यम्—याने सुर्ख लीन गिरानी पलक रा नफे रसानद, पक्ष्मणां गुरुत्वं क्लिन्नत्वं च निराकरोति।

स यथा—

शादनज् सप्त ७ मिस्काल तुहास् मुहरिक् एव च ॥
अक्लीमियाय फिज्जा च मामीशा उत्तमः पुनः ॥ ४०४ ॥
सिब्रसंकूतरी श्रेष्ठ इस्फीदाज वरः शुचिः ॥
समगवीति भिन्नं च मिस्काल—द्वय २ माहरेत् ॥ ४०५ ॥
जाफरां फणिफेनश्च नीम मिस्काल मात्रया ॥
शोणचूडस्य शुभ्रांऽभः सान्द्रं पक्वांडसम्भवम् ॥ ४०६ ॥
तेनौषधक्षोदयुक्तः शयाफ—गदनाशनः ॥ ४०७ ॥

शयाफ अफयूनी अबियज्। याने सुफेद—

वा०—नीरे पिष्ठाऽऽश्च्योतनं चक्षुषि विदध्यात्।
नेत्राऽऽमयं रमद—नामानं पूर्वाऽऽरंभ एव निरुणद्धि ॥ ४०८ ॥

स यथा।

वा०—समगवी ४ मिस्काल इस्फीदाज ७ मिस्काल ति-र्यांक् कतीरा प्रत्येकं १।१ मिस्काले चरणाऽण्डांडद्रवेण संमिश्र्य शयाफ कर्तव्यः ॥

शयाफ-अखजर। याने सब्ज जख्म रा दफे गर्दानद।

चक्षुःकंडूहरः परम् ॥

सा यथा—

जंगार—स्यात्त्रि ३ मिस्काल समगऽवी ततः पुनः ॥
इस्फीदाज निशास्ता च पृथग् दांग २ द्वयं स्मृता ॥ ४०९॥

संचूर्णितं च सकलं सुदाव-रससंगतम् ॥
रसे इश्शक-संभूते सर्वमेकत्र योजयेत ॥ ४१० ॥
टीका-दिवानिशं स्थापयेत् ॥
शयाफ सिद्धः कार्येषु भिषग्वर्यः प्रयोजयेत ॥ ४११ ॥

शयाफ अस्वद।

टीका-पान स्याह सवल् दमे रा दफे कुनद ॥

स यथा-

वा०-अल्कीमियाय जर इस्फीदालल् सिसास समगवी तिर्याक-प्रत्येकं दिरम् ४ मुर्र नुहास मुहरिक् संबलऽतीव निशास्ता पृथग्वत्साद्धैक ॥१॥ दिरम् अकाकिया मगस्ल दिरम् २५ दरआब इनबसालिब शयाफ साजंद ॥

शयाफ-अस्फर।

टीका-याने जर्द रमद सुजमिन् कुरुह वसूरात् चश्म वगेरे जायफल गर्दानद ॥
वा०-चिरंतनजलस्रावचक्षुपस्तन्निबर्हणः ॥

स यथा-

गुलाब-किंजल्क उदारगंध आदेय आयैंर्दिरम ३ त्रयं च ४१२
सुहूरिक् मगूसूल विधिना शुद्ध अक्लीमिया पुनः ॥
सि ३ मिस्काल-मितो ग्राह्यः कुंकुमं विद्रुमं तथा ॥ ४१३ ॥
फणिफेन। पृथक् टंकमित आदेय उत्तमः ॥ ४१४ ॥
जंगार-ताम्रचूर्णं च भिन्नं स्यादिरम ३ त्रयम् ॥
समगवी सि ३० मिस्काल सितच्छत्रारसैश्चरेत ॥ ४१५ ॥

शयाफे कि कूलिंज रीही रा बुकुशाय।

वा०-दर्दपुस्तरा जायल् गर्दानद-वातशूलघ्नः पृष्ठपीडाहरश्च ॥

स यथा।

विशाला इंर्मनी बूरा मह्मूदा च पृथक्पृथक् ॥
दिरमें १ चूर्णितं क्षौद्रयुक्तं कार्येषु योजयेत ॥ ४१६ ॥
वा०-अमसल् माकूद बाशद मधुपिंडितं भवेत् किंवा सितोपलः ॥

इत्येकादशो वर्गः ११.

# अथ वर्गो द्वादशः १२.



## रदीफ-ज्वाद ।

जमाद कि आमास गरम् रा जायल् गर्दानद् ।

प्रलेपः पित्तरक्तोत्थश्वयथुघ्न उदीर्यते ॥ ४१७ ॥

स यथा-

बाकलां यवपिष्टं च भिन्नं स्याद्दिरम-द्वयम् ॥

दिरमे १ कुंकुमं ग्राह्य कासनी-रसपोषितम् ॥ ४१८ ॥

काकमाचीद्रवैर्वापि पिष्टं सर्वं प्रलेपयेत् ॥ ४१९ ॥

जमादे-कि इरकुन्निसा रा दफे कुनद-गृध्रसीसंहरणः प्रलेपः ।

स यथा-

खत्मी-प्रसूनं बाबूना तुषा गोधूमसंभवाः ॥

मेथिका शिफत-बीजं च पृथग्दश १० दिरम् मतम् ॥४२०॥

कलम-स्वरसे पि । लेपादूरुसमीरनुत् ॥ ४२१ ॥

जमादे-कि आसावरा कि मुनइजरः शुदे बाशद नरम् गर्दानद ।

स यथा-

खत्मी-शिफातुल्यभरश्च कौशिकी रसे प्रपिष्टः कलम-प्रभूते ॥

प्रलेपतः प्रस्तरभूतदेहं हैयंगवीनप्रतिमं करोति ॥ ४२२ ॥

जमादे कि निक्रिस रा दफे कुनद ।

यवपिष्टं नख २० दिरम् तुर्यांशः फणिफेनकः ॥

वदर्द्धं जाफरां काकमाचीनीरैः प्रलेपयेत ॥ ४२३ ॥

इति द्वादशो वर्गः १२.

# अथ वर्गस्त्रयोदशः १३

रदीफ-तोय ।

तिलाये-कि सुदाय गरम् रा दफे कुनद् ।

वाक्य-रक्तपित्तप्रकोपोत्थशिरोरोगहरः सूक्ष्मः प्रलेपः ॥

स यथा-

सबयूष-सांद्रतोयेन कुस्तुंबुरुरसेन वा ॥
पिष्टश्रीखंडसंलिप्तमंबरं शिरसा वहेत् ॥ ४२४ ॥

तिलाये-कि सरसाम रा जायल गर्दानद् ।

वा०-प्रलेपः सन्निपातघ्नः ॥

स यथा-

आद्यं गुलाब रोगन्गुल् दिरम् पंज ५-मितं पृथक् ॥
सिर्का गुण ३-दिरम्-मानं सर्वं संमिश्य लेपयेत् ॥ ४२५ ॥

तिलाये-कि सुर्खीबाद रा जायल् गर्दानदः ।

स यथा-

वा०-बूयदरवन्दी या शयाफ मामीशा हमराह लुआब सबयूष लुआब खत्मी आब कशनीजतर-एतद्द्रवसंकरे सर्वं संमिश्य संपेष्य प्रलेपयेत् ।

तिलाये-अजब कि दर अरसे सि ३ रोज खारिश गलीज रा दीगर वसूरात मुजमिन् रा दफे गर्दानद बदन् रा पाक साजद-प्रलेपः पामानिरासपुरःसरं देहसंशोधनः ।

स यथा-

सीमाव गोगिर्द मनःशिला च त्रयं निशानामपि जीरकाणाम् ॥
सिंदूरमाज्यं मरिचं प्रलेपात्पामादवाग्नौ मुदिरप्रभावम् ॥ ४२६ ॥

तिलाये-कि अजी कूवा खारिज गर्दद-प्रलेपो दद्रुघ्नः ।

स यथा-

कालमेषी प्रपुन्नाटः कीर तंकार एव च ॥

मुदरीसंग तिर्य्याक माजू कदर पर्जनी ॥ ४२७ ॥
तुत्थं सीमाव किब्रीत निंबुकद्रवमर्दितम् ॥
प्रलेपाद्दद्रुसिध्मघ्नमायुर्वित्प्रवरैः कृतम् ॥ ४२८ ॥

इति त्रयोदशो वर्गः १३.

---

## अथ वर्गश्चतुर्दशः १४.

### रदीफ-ऐन ।

अतूसे-कि फालिज लका रा दफे कुनद ।
नस्यं पक्षवधार्दिताऽपहरणं कम्पप्रणाशाय च ।

तद्यथा-

जुंदबेदुस्तर तथा विशाला धर्मपत्तनम् ॥
समानं चूर्णितं वैद्यो धमेन्नसि विचक्षणः ॥ ४२९ ॥

अतूसे-कि लक्का तमद्दुद तशन्नुज रा दफे गर्दानद ।

यथा-

राजिका जुन्दबेदुस्तन् कुंदुश् पंज ५ दिरम् पृथक् ॥
दद्याच्चूर्णीकृतं नस्यं मर्दितायार्दिताय च ॥ ४३० ॥

अतूसे मसनूय रा नफे रसानद-अपस्मारिणे गुणप्रदमित्यर्थः नस्यमपूर्वचमत्कारकारकम् ।

तद्यथा-

मग्ज फिन्दकहिन्दी च उस्तूखूदूस-पुष्पकम् ॥
दारचीनी-पृथग्ग्राह्यं दिरम-त्रय ३-संमितम् ॥ ४३१ ॥
सूक्ष्मं संचूर्ण्य विध्मातं नसि ध्वांतं प्रभाकरः ॥ ४३२ ॥

अतूसे-कि सुदायपर्द सुवात रा फिल्हाल दफे गर्दानद ।

स यथा-

कुन्दुश खर्दिल उश्नान त्रयं ३ संचूर्णितं समम् ॥
नसीरितं द्रुतं हंति विविधाः शीर्षवेदनाः ॥ ४३३ ॥

अबीर-बहार।

प्रसूनमैरावतसम्भवं च जातीफलं वा नसरीन-सम्भवम् ॥
श्रीखंडमच्छं च गुलाब-पिष्टं छायाविशुष्कं हि सुगन्धिपूर्णम्॥४३४॥
आघ्राणमात्रेण मनोविकारान् शिरस्थदोषानपहंति सद्यः ॥
हृद्रोगचित्तभ्रमवैमनस्यं नस्यं कृशं भुग्नदृशं करोति ॥ ४३५ ॥

इति चतुर्दशो वर्गः १४.

# अथ वर्गः पंचदशः १५.

रदीफ-गैन।

गर्गरे-कि वरम् दर्द दंदान रा साकिन् गर्दानद ।

स यथा-

गुल्-खार-पत्रं सुमनादलं च वचानिशा-हमिल-हिंगुयुक्तम्॥
तुत्थं क्रिमिघ्नं शृतमंभसि स्याद्गण्डूषतः शोथहरं रदानाम्॥४३६॥

टीका-वेदनानाशनं च ॥

गर्गरे-कि खुलाक दमवी सफरावी रा दफे कुनद ।
रक्तपित्तमलरोधनाशनः कण्ठशोधनविधौ विचक्षणः ॥ ४३७ ॥

स यथा-

स्याह-तूत-रसो ग्राह्यो दश १०-मिस्काल-संमितः ॥
आब कश्नीज मिस्काल त्रिंश ३० त्संख्यं समाहरेत्॥४३८
किंवा मांगल्यकोद्भूतं शृतं वृक्षाऽम्लजं तथा ॥
सयोज्य सकलं तेन गंडूषो रोधमुक्तिकृत् ॥ ४३९ ॥

गर्गरे-कि खुनाक बल्गमी रा जायल् गर्दानद-कफकृतकण्ठरोधहा ।

स यथा-

आकारकरभो विश्वं चपला दिरम-त्रयम् ३ ॥
भिन्नं वारिणि सम्पाच्य क्षिपेत्तत्र शिकञ्जवीं ॥
असली दश १०-मिस्काल कोष्णं गंडूषमाचरेत् ॥ ४४० ॥

गर्गरे-कि दहन् दमाग रा अज अखलातफासिद पाक
गर्दानद-दुष्टदोषेभ्यः शिरोमुखसंशुद्धिकरः ।

स यथा-

खर्दिल् ग्राह्या सि ३ मिस्काल दश १० अमूली शिकञ्जवीं ॥
सर्वं कल्कीकृतं सम्यग् वारिणा वाससा शुचि ॥ ४४१ ॥
तद्गण्डूषः कफग्रंथिबन्धात्कण्ठविमोक्षणम् ॥
ज्ञानाऽसिर्निशितः क्षिप्रं व कुर्यात्कर्म्मबन्धतः ॥ ४४२ ॥
गर्गरे-हमी अमल् कुनद-एतद्गुण एव गंडूषोऽयम् ।

स यथा-

अयारज् फीकाराऽऽदेयो मिस्काले १ऽथ शिकंजवीं ॥
अमूली दश १०। मिस्काल योजयेद्वारिणोभयम् ॥ ४४३ ॥
गंडूषस्तस्य कोष्णोऽयं व्याधीनां ध्वंसकारकः ॥
उत्तमांगजुषां सद्यः पर्वतानां यथाऽशनिः ॥ ४४४ ॥

अन्यच्च-

यवक्षाराऽऽरनालाभ्यामंभसा च त्रिभिर्युतैः ॥
कवोष्णैः कृतगंडूषः पुमानाऽऽशु शमश्नुते ॥ ४४५ ॥
टीका-यावशूकाऽभावे मृष्टटंकणः ॥

इति पञ्चदशो वर्गः १५.

## अथ वर्गः षोडशः १६.



### रदीफ-काफ ।

#### कुरस-तवाशीर ।

कुरस्तवाशीर मुलय्यन स्यात्पित्तज्वरं हंति तृषं च दाहम् ॥
पारुष्यमत्युग्रकफाऽनिलोत्थं वक्षःस्थितं कण्ठगतं च सद्यः॥ ४४६॥

स यथा-

ग्राह्यं तवाशीर दिरम् चहार ४ तुरंजवीं पंज ५-दिरम्-प्रमाणा॥
एर्वारुमज्जा त्रपुसस्य मज्जा मज्जा तथाऽलाबुसमुद्भवश्च ॥ ४४७ ॥

समगवी निशास्ता च प्रत्येकं सि ३ दिरम् भवेत् ॥
कतीरा तुख्मखश्ख़ाश भिन्नं स्याद्दिरम–द्वयम् २ ॥ ४४८॥
सूक्ष्मं संचूर्णितं सर्वं सबूयूष्–द्रवसंगतम् ॥
मंडलानि ततस्तस्य च्छायाशुष्कानि कारयेत् ॥ ४४९ ॥
दिरमे १ दिरम–द्वंद्वं मात्रा वाऽस्य विनिर्मिता ॥
शर्बत् नीलोफर दश १०–दिरम्–मानेन भक्षयेत् ॥ ४५० ॥

कुरस् तबाशीर काबिज ।

टीका–रक्ताऽतिसाराऽपहः प्रदरनाशनो रक्तदुर्नामघ्नश्च ॥

स यथा–

उभे तु पंज ५ मिस्काल त्वक्क्षीरी गिल इर्म्मनी ॥
भृष्टः समगअवी च निशास्ता भर्जितस्तथा ॥ ४५१ ॥
बीजपूरस्य बीजानि संभृष्टानि समाहरेत् ॥
गुलाब–कुसुमं चेति प्रत्येकं दिरम–द्वयम् २ ॥ ४५२ ॥
जरक् सिमाक् इत्येतद्भिन्नं पंज ५ दिरम् भवेत् ॥
सर्वं गुलाब–नीरेण मंडलानि समाचरेत् ॥ ४५३ ॥
दिरमे १ वाऽथ मिस्काले १ दश १० मिस्कालहब्बुलांस्॥
शर्बत्–योगे समश्नीयात्सद्यः स्याद्गुणवत्तरम् ॥ ४५४ ॥

कुरस्–कहरुबा ।

रक्तनिष्ठीवनं रक्ताऽतिसारं प्रदरं तथा ॥

टीका–संहरेदिति शेषः ॥

स यथा–

कहर्वा विद्रुमं मुक्ता तुख्म खुर्फा च भर्जितम् ॥
प्रत्येकं पंज ५ दिरम–भिषग्वर्यैः समाहरेत् ॥ ४५५ ॥
विषाणमगभूतस्याऽजस्य भस्मीकृतं पुनः ॥
ताम्रचूडांडभसितं कतीरा । भर्जितस्तथा ॥ ४५६ ॥
समग्अवी तथैव स्यात्प्रत्येकं दिरम–त्रयम् ३ ॥
भृष्टः कुस्तुम्बुरुर्नागफेनबीजं सिताऽसितम् ॥ ४५७ ॥

भिन्नं च षड् दिरम् शंखभस्म बज़ुलवंज च ॥
पृथक्च दिरम्–द्वंद्वं २ सबूयू–द्रवसन्धितम् ॥ ४५८ ॥
मंडलं दिरमे १ किंवा मिस्काले १ प्राशनं चरेत् ॥
दश १०–मिस्काल–मानं च अंजुवार–भवं ततः ॥४५९॥
शर्बत्–तेनाऽशितं सद्योऽमृतसंजीवनाऽभिधः॥ ४६०
क़ुरस काफ़ूर–ताप्पदिक्क रा दफे कुनद–राजयक्ष्मनिषूदनम् ।

तद्यथा–

एर्वारु त्रपुष–बिही–अलाबुमज्जा
प्रत्यकं विशिख–५दिरम् गुलाब–पुष्पम् ॥ ४६१ ॥
रुव्वसूस तवाशीर भिन्नं स्याद्दिरम त्रयम् ३ ॥
समग़्अवी पटीरं च निशास्ता च पृथक्पृथक् ॥ ४६२ ॥
दिरम–द्वय २ मानश्च राजयाना दिरम् मतः ॥
जैवातृकोऽर्द्ध–दिरम सबूयूष–जलयोगतः ॥ ४६३ ॥
मंडलाकारकं कृत्वा दिरमे १ प्राशयेन्नरः ॥
तुख़्म खुर्फा–रसे पक्त्वा यक्ष्मपक्षविखंडनम् ॥ ४६४ ॥
क़ुरस बनफ़शा–रमद च चश्म तारीकी दर्द सर् सुदुरअन्तकम्
दव्वार–पित्तकफजप्रणाशनविचक्षणम् ॥ ४६५ ॥
प्रशस्तं नेत्ररोगेषु सफ़्रा बलगम रेचनम् ॥
साधयन्मनुजः श्रीशाऽनुग्रहादगदो भवेत् ॥ ४६६ ॥

स यथा–

बनफ़शा द्वि २ दिरम् तुर्बुदि १ श्वेता मस्मग–लक्षणा ॥
दिरमे १ चाऽथ संग्राह्या रुव्वसूस–हरीतकी ॥ ४६७ ॥
प्रत्येकं नीम दिरम गुंजे २ च सकमूनिया ॥
नीरकल्कीकृतं सर्वं मंडलीकृतमेव च ॥
गुलाब–शर्करोपेतं प्रगेऽमृतसहोदरम् ॥ ४६८ ॥

अन्यच्च—

माक्यम्—पूर्वोक्तगुणमेव ।

तद्यथा—

बनफ़शा दिग् १० दिरम् रुव्वसूस तुर्बुद अर्जुना ॥
प्रत्येकं हफ्त ७ दिरम मिस्काले १ सकमूनिया ॥ ४६९॥
जलसंयोगात्कुर्यात्तन्मंडलानि हि ॥
अथात्मागतुपानेन सद्यः प्रत्ययकारकम् ॥ ४७० ॥

कुरस किवर ।

कुरस् किवर सम्प्रोक्तः प्लीहपारुष्यखण्डनः ॥
स यथा उश्शक—वह्नि ३ संख्या दिरम ईरितम् ॥ ४७१ ॥
जराविन्द तवील् उक्तं दिरम २ द्वयमानतः ॥
निर्गुंडीसम्भवं बीजं मारिचं षड् ६—दिरम् पृथक् ॥ ४७२ ॥
संचूर्ण्य वारिणा कुर्यान्मंडलानि भिषग्वरः ॥
द्विरमे १ मात्रया देयं दिग् १० दिरम् स्यात् शिकंजवीं४७३

टीका—अनुपानविषय इत्यर्थः ॥

कुरस काकनज ।

कुरह गुर्दे मसाने रा दफे सोजाक—नाशनः ॥ ४७४ ॥

स यथा—

त्रपुसैर्वारुमज्जा च शीर्णवृन्तभवस्तथा ॥
बिही—भवश्च खशखाश् खव्वाजी तुख्म उत्तमम् ॥ ४७५॥
रुव्वसूस प्रभिन्नं स्यान्माने दिरम—पंचकम् ५ ॥
हव्वकाकनज श्रेष्ठं माने दश १—दिरम्—मितम् ॥ ४७६ ॥
लिसानुल्हमल—द्रावैर्मंडलाकारमाचरेत् ॥
खुर्फा नीरेण दिरमे १८ श्नीयात् खूबकलांऽभसा ॥ ४७७ ॥

अन्यच्च—पूर्वोक्तगुणमेव ।

तद्यथा—

काकनज् मग्ज बादाम रुव्वसूस ततः परम् ॥
समग्अवी निशास्ता च कतीरा च शशिप्रभः ॥ ४७८ ॥

दम्मुलअखवैन् दयायी कुन्दुरुः कर्कटीभवः ॥
त्रपुषः शीर्णवृन्तस्य मज्जा दश-१० दिरम् पृथक् ॥ ४७९ ॥
दीप्यकी द्वि २ दिरम् नागफेनो मिसर-संभवः ॥
दिरमे १ नीरपिष्टस्य मंडलान्यखिलस्य च ॥ ४८० ॥
छायाशुष्कानि सततं विधाय दिरमे १ऽन्वहम् ॥
खुर्फा- नीरेण वाऽश्नीयात् लिसानुल्हमल-द्रवैः ॥ ४२१ ॥

कतूरे-कि दर्द गोश अजअलामात गर्मी बाशद जायल् गर्दानद्-
कर्णपूरणाऽर्हं तैलम् ।

तद्यथा-

रोगन्गुल षड् ६ दिरम् रोगन्बादाम शत १०० संख्यकम् ॥
सिर्का-युक्तं पचेत्तावद्यावत्स्नेहोऽवशिष्यते ॥ ४८२ ॥
श्रवसि प्रक्षिपेत्कोष्णं दुरंतार्त्तिहरं ध्रुवम् ॥ ४८३ ॥

कतूरे कि दर्द गोश सर्दी रा जायल् गर्दानद्-
कर्णवेदनानाशनं शीतत्वखण्डनं च ।

तद्यथा-

मर्जंगोश-रसः शुद्धस्तथा आब सुदाव-जम् ॥
प्रत्येकं हफ्त ७ दिरम बाबूना-तैलमाहरेत् ॥ ४८४ ॥
दिरम् पंचदश १५ श्रेयः फर्फयून-भवं दश १० ॥
प्रसन्ना चिरकालीनाऽऽदेया दिरम-विंशतिः ॥ ४८५ ॥
संमिश्र्य विपचेत्तावत्तैलशेषं समाहरेत् ॥
कदुष्णं कर्णनिक्षिप्तं क्षिप्रमातंककर्षणम ॥ ४८६ ॥

कतूरे-कि दवी तनीन रा दफे कुनद्-सूक्ष्मस्थूलकर्णनाद-
व्याधिविध्वंसनं परमाश्चोतनम् ।

तद्यथा-

बादाम तलब बाबूना अनयोस्तैलमुत्तमम् ॥
रसः सुदाव-सञ्जातः पृथग् दश १० दिरम् भवेत ॥ ४८७ ॥
सिर्का पचेद् दिरम् सर्वमेकीकृत्य पचेद्बुधः ॥
शिष्टतैलं कवोष्णं तु निक्षिपेत्कर्णयोर्निशि ॥ ४८८ ॥

इति षोडशो वर्गः १६.

# अथ वर्गः सप्तदशः १७.

## रदीफ़ काफ़ ।

कुहले-कि अजबू तजबैंदारद ।

तद्यथा-

कपर्दशुक्तिक्रमुकं जलेन कांस्ये प्रघृष्टं नयनांजितं च ॥
माने नज़ूल् आब विदाहनाशि ध्वांतस्य विध्वंसनकर्म्मदक्षम् ४८९॥

कुहल् जाफरानी-खारिश चशमरा दफे गर्दानद-
कुंकुमाद्यंजननेत्रकण्डूविद्रावणं परम् ॥

तद्यथा-

कुंकुमं सुम्बल्-अतीव प्रत्येकं दिरम-द्वयम् २ ॥
मारिचं दिरमे १ कृष्णं श्वेतं दांगे १० समीरितम् ॥ ४९०॥
सार्द्धं चाऽथाऽर्द्धं-दिरम नवसारं विनिक्षिपेत् ॥
अफस् सि ३ दिरम ग्राह्यं नीम दांग निशाकरः ॥ ४९१ ॥
श्लक्ष्णीकृतांजितं प्रायः पृषतीसंगतं हितम् ॥ ४९२ ॥

कुहले-कि ज़ुलमत बसर खारिश चशम रा दफे कुनद-
नेत्रतिमिरकण्डूहरणमंजनम् ।

तद्यथा-

तुत्थकं दिर् १० दिरम् शुद्धं विद्रुमं चेतकी तथा ॥
सिवर्सकूतरी भिन्नं ४ चहार दिरम स्मृतम् ॥ ४९३ ॥
ऊषणं नीम दिरमे १ चपला दिरमे १ स्मृता ॥
अंजनं नित्यशः कार्य्यं शलाकासंगतं नरैः ॥ ४९४ ॥

कुहल बनफशजी । पूर्वोक्तगुणमंजनम् ।

तद्यथा-

शादनज् दिरमे १ दम्मुल् अखवेन् मदराण्डजः ॥
सूक्ष्मैला च पृथग् दांगे १ अफस् ताम्रस्य भस्म च ॥ ४९५ ॥
प्रत्येकं दिरमे १ सादज् हिंदी दांग-द्वयं २ स्मृतम् ॥
मांसी कृष्णा पृथङ् नीम-दिरम् माने उदाहृते ॥

प्राग्वदंजनमाधेयं पृषत्या भिषगुत्तमः ॥ ४९६ ॥

कमादे-कि दर्द बीहो रा जायल गर्दानद-स्वेदनं जठरस्थवातशूलहरम् ।

तद्यथा-

शतपुष्पा यवानी च जीरकं पृथगाऽऽहरेत् ॥

दश १० मिस्काल-मानेन गुलाब-कुसुमं ततः ॥ ४९७ ॥

तदर्द्धं चूर्णितं सर्वं स्वेदनेन रुजाऽपहम् ॥ ४९८ ॥

कमादे दीगर-कि हमी अमल्र कुनद-स्वेदनमपरं प्रागुक्तगुणप्रदमेव ।

तद्यथा ।

तुषा गोधूमसंभूता लवणं पांशुसंभवम् ॥

यवानी च समं सर्वं पिष्ट्वा संस्वेदनं चरेत् ॥ ४९९ ॥

किश्ता-अभिधानं प्राशनाऽर्हं भेषजं हृद्रोगहरं हृत्पद्मश्रियः परमाऽऽमोदवर्द्धनं द्रविणप्रदं च ।

तद्यथा-

गुलाब-घृष्टं हरिचंदनं च च्छायाविशुष्कं च तथा अबीर ॥

मिस्कोल-माने दशपंच १५ संख्ये अथाऽगरुर्मुश्क तथांबर स्यात् ५०० ॥

मिस्काले सकलं चूर्णं गुलाब सितया युतम् ॥

पाकेन लेहवत्साध्यं दृषदि प्रक्षिपेद्धिमम् ॥ ५०१ ॥

इति सप्तदशो वर्गः १७.

## अथ वर्गोऽष्टादशः १८.

### रदीफ लाम् ।

लऊक-जूफा ।

दोषैराक्रांतरूपस्य वक्षसः फुफुसस्य च ॥

शोधनः श्वासकासघ्नो वलासबलकंतनः ॥ ५०२ ॥

स यथा-

ईरसा खुश्क जूफा च पृथग् दिरम २० विंशतिः ॥

साऽशीतिशत १८०-मिस्काल कंद-पाकेन साधयेत् ॥ ५०३ ॥

पंज ५ मिस्काल—मानेन मात्रा वैद्यविनिर्मिता ॥ ५०४ ॥

लऊक—अस्कील—चिरन्तनश्वासकासबलासबलनाशनः ।

स यथा—

अस्कील—भर्जितस्तस्य रसः सि ३ दिरम स्मृतः ॥ ५०५ ॥
ईरसा दिरम—द्वंद्वं २ ततो जूफा फरासयून् ॥ ५०६ ॥
प्रत्येकं दिरमे १ क्षुण्णं सिता दश १० दिरम् सिता ॥
क्षौद्रं सी पंज ३५ मिस्काल लेह्यं प्रातस्तु पूर्ववत् ॥ ५०७ ॥

लऊक—खियार शंबर—शम्याकाऽवलेहः ।

कासश्वासज्वरहरो मुलय्यन्—शक्तिसंयुतः ॥ ५०८ ॥

स यथा—

पंचाशद् ५० दिरम् आदेयः सारः शम्याकजोऽर्णसाम् ॥
शतं १०० दिरम संयोज्य पचेन्मधुयुते उभे ॥ ५०९ ॥
समग्अवी कतीरा च मग्जबादाम—संभवः ॥
तेन संमिश्रितं कोष्णं पंज ५ मिस्काल—आहरेत् ॥ ५१० ॥

इत्यष्टादशो वर्गः १८.

---

# अथ वर्ग एकोनविंशतितमः १९.

## रदीफ—मीम ।

### मुफर्रह—याकूती ।

प्राशनात्सहसा हंति हृद्रोगं मनसो भ्रमम् ॥
द्रविणाऽऽमोददा कामदीपनी चेतसः श्रियः ॥ ५११ ॥
वाह अंगेज वर्ण्या स्यात् मुशम्मी पाचनी परा ॥
सुरतइंजाल—रोगघ्नी राजार्हाऽनवमाऽमृतात् ॥ ५१२ ॥

सा यथा—

वरो याकूत रुम्मानी जर्द याकूत—उत्तमः ॥
याकूत नीलवर्णश्च फेरोजा लाल एव च ॥ ५१३ ॥

जवजैंद च जम्रुद् च पशम् संग अकीक च ॥
लाजवर्द च भिन्नं स्या द्दिरम–त्रय ३–मानवः ॥ ५१४ ॥
मुक्ताश्च दश १० मिस्काल प्रस्तरे मर्दयेद्भृशम् ॥
द्रवेऽनिशं वेदमुश्क गुलाब–प्रभवेऽपि च ॥ ५१५ ॥
ततश्च ब्रह्मन–द्वंद्वं २ नवं शोणाऽर्जुनप्रभम् ॥
दरूनजऽक्रवी चाऽपि शकाकुल्ह मिसरी तथा ॥ ५१६ ॥
सालिब् काहजवां कोही गुलसुरख् संदलेन च ॥
वालंगू च पृथक्सर्वं ग्राह्यं मिस्काल–विंशतिः २० ॥५१७॥
खूलिजां दारचीनी च देवपुष्पं ततः कणा ॥
एलाद्वयोग्रगंधे च भृष्टा संविद्वरा पुनः ॥ ५१८ ॥

टीका–अत्रोग्रगधा–चोबचीनी इति ॥

जंजवील–पृथक्त्रिंशत् ३० मिस्काल समुपाहरेत ॥ ५१९ ॥
कहवां कुंकुमं भस्म कौशेयप्रभवं ततः ॥ ५२० ॥
शतपुष्पा च तगरं भारती च यवानिका ॥
अफ्तीमून् कासनी वंशरोचना कशनीज च ॥ ५२१ ॥
गुल्हीलोफर दर्यायी भिन्नं मिस्काल–पंचकम् ५ ॥
त्रिफला मेचकशिवा मस्तगी च पृथक्पृथक् ॥ ५२२ ॥
हफ्त ७ मिस्काल संग्राह्यं पंच ५ जातीफलानि च ॥
मिस्काले १ एणनाभिश्च सर्वं सूक्ष्मं विचूर्णयेत् ॥ ५२३ ॥
दुर्वर्णस्य सुवर्णस्य मिस्काले १ स्युर्दलानि च ॥
नवात कंद अथवा समः स्यात्तत्समं मधु ॥ ५२४ ॥
बीही सेव अनारैन २ कासनी वेदमुश्क च ॥
गुलाब् काहजबां चैषां रसाश्च अरक क्रमात ॥ ५२५ ॥
सर्वद्रवसमूहेऽस्मिन्सितामधुविपाचिते ॥
हिमे समौषधिगणं यथाविधि नियोजयेत् ॥ ५२६ ॥

टीका–मात्रा मिस्काले १ मुशम्मी–देहपुष्टिकरीत्यर्थः ॥

मुफर्रेहहार-

सौदावलगम-संभूतहृद्रोगध्वांतदीपिका ॥ ५२७ ॥

सा यथा-

बह्मनैन २ जरंबाद भिन्नं दिरम-विंशतिः २० ॥
दरूनजऽकवी बादरजंबूया ततः परम् ॥ ५२८ ॥
किमारी ऊद वुसुद दिग् १०-दिरम् मानवः पृथक् ॥
मांसी बाण ५-दिरम् भिन्नं देवपुष्पं च कुंकुमम् ॥ ५२९ ॥
नीम मिस्काल मुश्क स्यात्तपनीयदलानि च ॥
रुव्वसेव त्रिगुणितं संयोज्य स्थापयेत्सुधीः ॥ ५३० ॥
अथादुषसि मिस्काले १ पीयूष सदृशीं नरः ॥ ५३१ ॥

मुफर्रेह-वारिद-

सफ़ावी दमवी खफका याप्याऽऽमयनिबर्हणी ॥ ५३२ ॥

सा यथा-

कासनी च तवाशीर ततः काहजबां पृथक् ॥
त्रि ३ दिरम् नूतनं धात्रीफलं पंचगुणं ततः ॥ ५३३ ॥
गुलाब-कुसुमं मुक्ता विद्रुमं हरिचन्दनम् ॥
कहर्वा च समादेयः पृथगर्ध-दिरम्-मितम् ॥ ५३४ ॥
कुंकुमं नीम-दिरम रुव्वसेव-समन्वितम् ॥
नीम-मिस्काल दुर्वर्णदलं तत्र प्रयोजयेत् ॥ ५३५ ॥

मुफर्रेह-जवानी-

पाचनी परमा कामक्षुधोः सन्दीपनी भृशम् ॥ ५३६ ॥

सा यथा-

एलाद्वयं जातिफलं जातिपत्री च नागरम् ॥
कणा च पृथगाऽऽदेयं दश १-मिस्काल-मानतः ॥ ५३७ ॥
यवानीं च नवां पंचाशत् ५०-मिस्काल-प्रमाणतः ॥
काश्मीरं पंज ५ मिस्काल मातुलानी तथैव च ॥ ५३८ ॥

संचूर्ण्य सकलं सूक्ष्मं पूर्ववद्वैद्यसत्तमैः ॥
मधुनि त्रिगुणे साध्यं मिस्काल २–द्वयमाहरेत् ॥ ५३९ ॥

मुफर्रह–दिल कुशाः ।

हृच्छिरोवृक्कबलदा क्षुत्करी पाचनी परा ॥
कामसन्दीपनी वर्ण्या मनसः संप्रसादनी ॥ ५४० ॥

सा यथा–

शकाकुल् मिसरी सालिब् खूलिंजां बह्मन् अर्जुनः ॥
दरूनज् अकवी भिन्नं दश १०–मिस्काल–सम्मितम् ५४१॥
जातीफलं काहजबां वालंगू विश्वभेषजम् ॥
श्रीसंज्ञं कुंकुमं जातीफलमेलाद्वयं पुनः ॥ ५४२ ॥
मस्तगी दारचीनी च पृथङ् मिस्काल–सप्तकम् ७ ॥
मिस्काले १ मुश्क विजयां सर्वतुल्यां विनिक्षिपेत् ॥ ५४३ ॥
मधुनि द्विगुणे योज्यं समस्तं चूर्णितं ततः ॥
कन्द–द्विगुणसंयुक्तं मिस्काले १ प्राशयेत्प्रगे ॥ ५४४ ॥

माजून–याकूती अजीम् ।

मुस्किन मुनइज् श्रेष्ठा शक्तिद्वंद्वपरिष्कृता ॥
आविष्कृता सुमनसा वैद्यराजेन धीमता ॥ ५४५ ॥

सा यथा–

मुक्ता संगपशम् पुनः कहरुवा सद्विद्रुमं मस्तगी
प्रत्येकं दिरम–त्रयं ३ च बहमन्–युग्मं चतुष् ४ कर्षकम् ॥
तद्वन्नं वर–तूदरी–द्वय २ मपि ग्राह्यं च जातीफलं
जातीपत्रिकया तथैव सहितं गर्की गरीयो महत् ॥ ५४६ ॥
शकाकुल् मिसरी सालिब् वेखऽल्फा कुंकुमं तथा ॥
पृथग् दाम द्वयं प्रोक्तं दामे १ स्याद्वंशरोचना ॥ ५४७ ॥
कस्तूरी दिरम–द्वंद्वं सुवर्णं दिरम–त्रयम् ३ ॥
दुर्वर्णं षट् ६–दिरम्–मानं दिरमे १ अंबर स्मृतम् ॥ ५४८॥

ऊदगकी दारचीनी भिन्नं दिरम-पंचकम् ॥
सर्वं संचूर्णितं सूक्ष्मं विहितं च यथाविधि ॥
अंगवी कन्द उभयं सर्वस्माद्द्विगुणं भवेत् ॥ ५४९ ॥
गुलाब-द्रवपाकेन सिद्धमात्रा यथोचिता ॥ ५५० ॥

माजून-रशोदी। मनें तकतीरुल्बोलकुनद्-दाफे सुरतइंजालऽस्तः।

सा यथा-

कवाबचीनी क्रमुकं देवपुष्पं च मस्तगी ॥
सालिब्रू जातीफलं भिन्नं यवानी दिग्१०-दिरम्-मितम् ५५१
मधुनि द्विगुणे स्वच्छे मिस्काले १ भक्षयेद्युतम् ॥ ५५२ ॥

माजून-फलासफा।

तनुवे तबियत् मादा समीरघ्नी च पाचनी
रेतः-संवर्द्धिनी कामदीपिनी बुद्धिदायिनी ॥ ५५३ ॥
बजेमुफासिल-ध्वंसकरी पृष्ठार्तिनाशिनी ॥ ५५४ ॥

सा यथा-

त्र्यूषणं दारचीनी च शिवा पथ्या धनंजयः ॥

**टीका**-धनंजयश्चित्रकः ॥

जराबिंदं पुनर्गिंदं बाबूना रेश-शाखजः ॥ ५५५ ॥
सालिब्मिस्री च चिल्गोजा मज्जा श्रीफलसंभवः ॥
प्रत्येकं दिग् १-दिरम् द्राक्षाश्चत्वारिंश४० च संख्यया॥५५६॥
सर्वमेकीकृतं सूक्ष्मं द्विगुणे मधुनि क्षिपेत् ॥ ५५७ ॥

माजून-इनकिर्दिया कबीर।

स्वह्नफालिज लक्वा च तमुद्दद तशन्नुज ॥
समस्तश्लेष्मसंजातविकारांश्च नियच्छति ॥ ५५८ ॥

सा यथा-

आकारकरभः कुष्ठं शोनीज चपलोषणम्
वचा दश १० दिरम् भिन्नं सुदाव-छदनं तथा ॥ ५५९ ॥

जन्तियाना च हिल्तीस जराबिन्द च वर्तुल ॥
इव्वलूगार् अग्निनामा च जुन्दबेदुस्तरे पृथक् ॥ ५६० ॥
राजिका पंज ५ दिरम नारिकेलाऽऽज्यमुत्तमम् ॥
तिलतैलं तथा त्रिंशद् ३० दिरम्-मानं समाहरेत् ॥ ५६१ ॥
मिस्काल-तुर्य ४-द्वयसः स्नेहो भल्लातसंभवः ॥
क्षौद्रे च द्विगुणे योज्यं मिस्काले १ ऽन्वहमाहरेत् ॥ ५६२ ॥

माजून-इनकिर्दिया सगीरः-विस्मृतिध्वंसनी मेधाबुद्धिसंवर्द्धिनी सरा ।

सा यथा ।

फलत्रिकं दश १० दिरम् मुस्ता मांसी च नागरम् ॥
भल्लाततैलं प्रत्येकं ग्राह्यं बाण ५-दिरम्-मितम् ॥ ५६३ ॥
स्नेहः श्रीफलसंभूतस्तैलं तिलसमुद्भवम् ॥
सर्वमेकीकृतं सूक्ष्मं मधुनि द्विगुणे क्षिपेत् ॥ ५६४ ॥
मिस्काले १ दिरमे १ किं वा नित्यमद्यादतन्द्रितः ॥ ५६५ ॥

माजून-हिलतीसः । तप्प रुबेर्ध रा व गजीदगी अमे जान-
वरां रा दफे गर्दानद-चातुर्थज्वरसमस्तविषकी-
टदंशनाशिनी स्यात् ।

सा यथा-

हिलतीस मुर् मरिचं सुदाव-दलमेव च ॥
संग्राह्यं दिग् १०-दिरम्-मानं सूक्ष्मं संचूर्णितं पृथक् ॥ ५६६ ॥
मधुनि त्रिगुणे युक्ता मिस्काले १ प्रातराहरेत् ॥ ५६७ ॥

माजूम खियार शंबर ।

सफा-बल्गम-सौदा-जश्लमूलनिकृंतनी ॥ ५६८ ॥

सा यथा-

तुबुंद १० तुर्य्य ४-दिरम्-माना वनफ्शा विंशतिः स्मृतः ॥

नमक् दिहि रुव्वसूस भिन्नं दिरम सप्तकम् ७ ॥ ५६९ ॥
राजयाना अनेसूं च मस्तगी बाण ५ संख्यया ॥
सक्मूनिया दश १० दिरम् सर्वं सूक्ष्मं विचूर्णयेत ॥५७०॥
चत्वारिंश ४०—दिरम् रोगन्शीरीं बादाम—संभवम् ॥
दिरम् शत १०० मितो ग्राह्यः सार आरग्वधोद्भवः ॥ ५७१ ॥
सारघे द्विगुणे कंद—मध्येऽर्द्धद्वयसे तथा ॥
योज्यं भक्ष्यं सि ३ मिस्काल सायं प्रातश्च मात्रया ॥५७२॥

माजून—सूरंजा । वजे जुहन वजेवरक वजे मुफासिल्द् इरकुन्निसा रा दफे कुनद—पृष्ठस्फिक्संधिपीडां च हरेदूरुसमीरणम् ।

सा यथा—

सूरंजा मिसरी त्रिंश ३० न्मिस्काल—प्रमिता नवा ॥
हिना—पत्राणि मिस्काल—द्वयं २ शुष्काणि चूर्णयेत॥५७३॥
वह्निः कमून किर्मानी प्रत्येकं दिरम—द्वयम् २ ॥
पोस्त् वेख किवर् फेनः सामुद्रश्चन्द्रसन्निभः ॥
मिलहनुक्ती पृथग्युग्म २—मिस्काल—प्रमितं भवेत् ॥ ५७४ ॥
तुर्बुद् चहल ४० दिरम् जंजबील हफ्त ७ दिरम्—मिता ॥
वूजीदां पंज ५ दिरम त्रि ३ दिरम् सकमूनिया ॥५७५॥
पथ्या च पंज ५ मिस्काल सर्वं सूक्ष्मं विचूर्णयेत् ॥
त्रिगुणं मधु संयोज्यं मिस्काले १ नित्यमाहरेत् ॥ ५७६ ॥

माजून ।

मुश्तिहही पाचनी शुक्र (वर्धिनी) दीपनी वह्निकामयोः ॥५७७॥

सा यथा—

तरखून् षड् ६—दिरम् श्वेतमूषणं मस्तगी तथा ॥
दारचीनी पृथक् सप्त ७ दिरम् कुंकुममाहरेत् ॥ ५७८

त्रि ३ दिरम् चंद्रवाला तु चतुर्दश १४ दिरम् भवेत् ॥
करन्फल् दिग् १०-दिरम् जातीफलानि त्रिंश ३० देव हि५७९
संख्यया विजया त्रिंश ३० द्दिरम् मुश्क दिरम् १ भवेत् ॥
रोगन्बादाम शीरीं च माने दश १० दिरम् मतम् ॥ ५८० ॥
संयोज्य द्विगुणे क्षौद्रे यथासात्म्यमदेन्नरः ॥ ५८१ ॥

माजून शाहतरा ।

कण्डूरक्तविकारघ्नी ज्वरघ्नी तृट्प्रशांतिदा ॥
दाहसन्तापशमनी वैवर्ण्यध्वंसिनी सरा ॥ ५८२ ॥
पित्तोपशमनी शीता दोषसंशोधनी परा ॥ ५८३ ॥

सा यथा-

हरीतकी काबिल-संभवा या पीता सिता च त्रिविधा प्रशस्ता ॥
भिन्ना च मिस्काल १० दशप्रमाणा वालंगु-बीजं च तदर्द्धमानम् ५८४
पर्पटो नव आदेयश्चहल् ४० मिस्काल-संमितः ॥
चूर्णितं सकलं सूक्ष्मं क्षौद्रे द्विगुणिते क्षिपेत् ॥ ५८५ ॥
मिस्काल-त्रितयं किंवा पंज ५-मिस्काल-मानवः ॥
प्राशिता निशि च प्रातः सर्वाऽऽमयनिषूदनी ॥ ५८६ ॥

माजून-खबसुल्हदीद ।

खदन् मादेबवासीरसुरतईजाल-नाशिनी ॥
वर्ण्या रेतःप्रसूनेषोर्वर्द्धिनी दीपिनी क्रमात् ॥ ५८७ ॥

सा यथा-

असिता काबली चेति कायस्था च शिवोषणम् ॥
कृशानुर्नागरं मांसी वारिदश्च पृथग्वरः ॥ ५८८ ॥
आहरेद्दिग् १०-दिरम्-मानं शिग्रु-बीजं च गंदना ॥
प्रत्येकं तुर्य ४-दिरम मंडूरः स्याच्चतुर्दश ॥ ५८९ ॥

भावितः सम्यगादेयः सिर्का-मध्येऽनिशं वरः ॥
पक्षैकं च ततश्छायाशुष्कः कार्योपयोगकृत् ॥ ५९० ॥
रोगन्बादाम-पिष्टैश्च भृष्टः शत १०० दिरम्-मितैः ॥
कस्तूरी दिरम-द्वंद्वं २ चूर्णितं विधिनाऽखिलम् ॥ ५९१ ॥
त्रिगुणं मधु निक्षेप्य मात्राऽस्याद् दिरम-२ द्वयम् ॥ ५९२ ॥

माजून-कमूनी ।

बलकृत्पवमानघ्नी शैत्यं पक्वाशयोद्भवम् ॥
हंति संदीपनी वह्नेः पाचनी परुषस्य च ॥ ५९३ ॥

सा यथा-

शस्तं कमून किर्म्यांनी-भावितं सिरका-द्रवे ॥
अहर्निशं ततश्छायाशुष्कं वैद्यः समाचरेत् ॥ ५९४ ॥
पुनः संभर्जनं तस्य विधेयं मंदवह्निना ॥
ग्राह्यं शत १००-दिरम् त्रिंशद् दिरम् ऊषणमिष्यते ॥५९५॥
विश्वं सुदाव-पत्राणि चत्वारिंशद् ४० दिरम पृथक् ॥
बूरे इरमनी भृष्टो ग्राह्यो दश १०-दिरम् बुधैः ॥ ५९६ ॥
संचूर्ण्य त्रिगुणे क्षौद्रे संयोज्य विधिसाधिता ॥
मिस्काले १ प्रत्यहं सेव्या शूलद्रुमकुठारिका ॥ ५९७ ॥

माजून-मुमस्किक, कि अजायब तमाशा जश-नुमायद ।

सा यथा-

नखूद विरियां पाव आसार वितुषाः शुभाः ॥
मज्जा श्रीफलसंभूतो रोगन्सर्शफ एव च ॥ ५९८ ॥
प्रत्येकं नीम पाव स्याद् दामे १ तिर्याक-संगमः ॥
पंचाश ५० त्संख्यया द्राक्षा मुनक्का-नामविश्रुताः ॥ ५९९ ॥

जातीफलानि चत्वारि ४ पंच ५ खर्जूरजानि च ॥
सर्वमेकत्र संचूर्ण्य संमर्द्य च मिथः पुनः ॥ ६०० ॥
मात्रा निष्कमिता क्षीरं सैक्षवं चाऽनुपानतः ॥
कामिनीरंगलीलासु सृणिस्तत्कामदंतिनः ॥ ६०१ ॥

साम्लं पटु स्खलनकर्म्मणि रेतसः स्यात्पुण्यक्षयो
निपतने मनुजस्य च स्यात ॥
एकस्य जन्मविभवेऽपि पुनः सुखं
स्यात्प्रक्षीणतामतिसुखं त्वपरस्य च स्यात् ॥ ६०२ ॥

किंचाऽन्यच्च–

तिर्य्याक हिमिलू चपला तिलाश्च सौरभ्यसंपूरिततुर्य्यजातम् ॥
तर्खून–शुण्ठीसममानपिष्टं भृष्टं प्रकुष्ठं सकलाऽर्द्धमानम् ॥६०३॥
क्षौद्रे नवीनेऽक्षिगुणे नियुक्तं भुक्तं हि माषप्रमितं नरस्य ॥
मजी–वदी–शोषणतत्परं स्यात्परं मनी–पोषणभावदक्षम् ॥६०४॥

माजून–सुलतानी आली शानः ।

वर्ण्योऽवलेहः स्मरदीपनश्च रेतः सुस्तंभनकर्मदक्षः ॥
व्यवायलीलासु विलासिनीनां कन्दर्पदर्पक्षपणं करोति ॥६०५॥

सा यथा–

मुश्क अम्बर मिस्काले १ द्वयं सुरुचिरं हरेत् ॥
पंज ५ मिस्काल–माना तु भवेन्मांसी च मस्तगी ॥ ६०६॥
आकारकरभस्तीक्ष्णः सि ३ मिस्काल–मितो वरः ॥
नागवल्लीदलानि स्युः पंचविंशति २५ संख्यया ॥ ६०७ ॥
सन् दव्वालक खूलिंजा उभे मांसीसमे स्मृते ॥
अगतुंकी सि ३ मिस्काल चोबचीनी तथैव च ॥ ६०८ ॥

मिस्री सालिब मिस्काल दश १० कुंकुममेव हि ॥
पुरंदरयवा मिष्टाः पंच ५-मिस्काल-सम्मिताः ॥ ६०९ ॥
धात्रीफलं दारचीनी मिस्काल-द्वय २-मानतः ॥
जलदश्चपला धर्म्मपत्तनं च तथा पृथक् ॥ ६१० ॥
मिस्काल पंज ५ आदेयं बालगां मुख्लिसा पुनः ॥६११॥
प्रत्येकं १० दश मिस्काल मग्ज कुंजश्क पुंभवः ॥
मिस्काल पंज ५ मिस्काल दश १० काहजवां तथा॥६१२॥
तूदरी-युगलं चाऽथ वहमन्-द्वंद्व २ मुत्तमम् ॥
मिस्काल-द्वितयं २॥ सार्द्धं सादकूपी तु पंचकम् ॥६१३॥
गुलाब-कुसुमं शोणं दश १० हेमदलानि तु ॥
राजतानि च पत्राणि मिस्काल-त्रि ३ रसाः ६ क्रमात६१४॥
नागफेनश्च मिसरी खियाल् मामून एव च ॥
मिस्काल-संख्यया शस्तं हरेत्पंचदशा १५ऽऽख्यया ॥ ६१५ ॥
रोगन्वादाम सुस्निग्धं सर्वं संचूर्णितं चरेत ॥
मधुना कंद-युक्तेन पाकं संपादयेद्बुधः ॥ ६१६ ॥
मात्रा यथाकालबलं योजयेद्वैद्यसत्तमः ॥

मतदूखः हलेलज-पथ्यादिक्वाथः ।

समस्तपित्तकोपोत्थाऽऽतंकांतक उदीरितः ॥
कषायः पूतनादीनां भेषजानां गुणोत्तरः ॥ ६१७ ॥

स यथा-

हरीतकी तमर् हिन्दी दिग् १० दिरम् विंशतिः २० क्रमात् ॥
आलूबुखारा उन्नाव सर्पिस्तां संख्यया पृथक् ॥ ६१८ ॥
त्रिंश ३० त्पुनः कासनी च बनफ्शा दिरम-त्रयम् ॥

क्षुण्णं प्रस्थेऽम्भसि पचेत्तृतीयांशं ३ समुद्धरेत् ॥ ६१९ ॥
तत्र चांबरसंशुद्धे शीरखिश्त दिरम् दश १० ॥
प्रक्षिप्य कोष्णं प्रपिबन् प्राणी सद्यः शमृच्छति ॥ ६२० ॥

तर्कीब-दीगरः। अपरो विधिः।

दिग् १०-दिरम् काबली पथ्या सप्त शाहतरा स्मृतः ॥
आलूबुखारां उन्नाब संख्यया विंशतिः पृथक् ॥ ६२१ ॥
कासनी शतपुष्पायाः शिफात्वक् सी ३० दिरम् भवेत्॥६२२॥
प्रस्थेंबुनि पचेत्क्षुण्णां तुरीयांशमुपाहरेत् ॥
सिद्धे तस्मिन्क्षिपेत्पंचदशसंख्या १५ दिरम्-मितम् ॥ ६२३ ॥
सारं शम्याकनिर्बीजं गुलकन्द दिरम् दश १० ॥
दिरम द्वे २ च बादाम शीरा रोगन्-विमिश्रितम् ॥ ६२४ ॥
कोष्णो निपीतश्चातुर्थज्वरमत्तगजांकुशः ॥ ६२५ ॥
पीता हरीतकी पोस्त हलेलयूकाबली तथा ॥
भिन्नं दश १० दिरम् रेणुः सनाय् पंज ५ दिरम् पृथक् ६२६
अफ्तीमून ऽब्धि ४ दिरमसर्पिस्तां सी ३० अदद स्युः ॥
आलूबुखारा तावन्तो ३० बालंगा तुरुमकासनी ॥६२७॥
गुलाब-कुसुमं चेति प्रत्येकं दिरम-त्रयम् ३ ॥
प्रस्थे वारिणि संपाच्यं तृतीयांशं समाहरेत् ॥ ६२८ ॥
शीरखिश्त प्रशस्तं यन्मासे दिरम-२० विंशतिः ॥
संमिश्र्य प्रपिबेत्कोष्णं प्रागुक्तगुणदर्शकम् ॥ ६२९ ॥

मतबूख अफ्रीमून–मालीखूलियाकूवा जख् वहव् वहक् स्याह
रा दफे गर्दानद् क्रमशश्चित्तभ्रमदद्रुकण्डूमेचकवर्णसिध्मविकारा
ज्ञेयास्तान्निवारयतीत्यर्थः ।

स यथा–

सनाय हफ्त ७ दिरम विस्फायज् दिरम् त्रयम् ३ ॥
अफ्रीमून् पंज ५ दिरम ततश्च परस्यांविशां ॥
गुल्ह नीलोफरदर्यायीउस्तुखूदूस एव च ॥
बालुंगा कवचं चेति प्रत्येकं दिरम–द्वयम् ॥ ६३० ॥
मवीज दिग् १०–दिरम्–माना प्रस्थंभस्यखिलं पचेत् ॥
वासःशुद्धं च तन्नीरं तृतीयांशं समुद्धरेत ॥ ६३१ ॥
शम्याकं शर्करां शोणां दिरम् पंचदश १५ क्षिपेत ॥
दांगे १ गारयकूनऽच्छं रोगन्बादाम मिष्टजम् ॥ ६३२ ॥
दिरमे १ युगलं वा स्यादेवं सिद्धः कषायकः ॥
कोष्णो निपीतः श्रीरामबाणवद्रोगरक्षसाम् ॥ ६३३ ॥

मतबूख–पोदीना बागी ।

विसूच्यजीर्णहृद्दाहजुगुप्सावांतिशांतिकृत ॥
हिक्काज्वरश्वासकासशमनः शोधनोऽपि च ॥ ६३४ ॥

स यथा–

पोदीना दिरम–द्वंद्वं २ चपलाऽर्द्ध–दिरम् मिता ॥
दिरमे १ हील खुर्द स्याद्देवपुष्पं अर्ददू दश १० ॥ ६३५ ॥
गुलाब–कुसुमं शोणं दिरमे १ संनियोजयेत ॥
मृद्वीका पंज ५ दिरम श्वेतः कंद पुनस्तथा ॥ ६३६ ॥
प्रस्थाऽर्द्धसलिले सर्वं श्रपयित्वा हिमं ततः ॥

निष्कार्द्धं ऊद हिन्दी च चूर्णितं तत्र निक्षिपेत् ॥ ६३७ ॥
कार्याऽस्नेहसि संपेयं सुधया सदृशं गुणैः ॥ ६३८ ॥

मर्हम् मुकीलः–बवासीर शिकाक मिकअदरा दफे कुनद–
अर्शः पायुक्षतं हरेत् ।

मुकूलऽजंक दश १० दिरम् उमासांद्राबुर्विंशतिः ॥ ६३९ ॥
मोम पंज ५ दिरम् पीतं तिलतैलं दश १० स्मृतम् ॥ ६४० ॥
तैलांभःसिक्थके वह्नौ द्राविते निखिलं क्षिपेत ॥
संमर्द्य रोपणं श्रेष्ठं व्रणे संलिप्तमर्शसि ॥ ६४१ ॥

मर्हमे–कि माशरा सोफे तुमले तमाम वमूरात रा जायल् गर्दानद ।
स यथा–

गुलाब–पुष्पं मारिचं च धात्रीफलस्य पुगस्य च भस्म योजितम्॥
सिंदूरजीर्णेऽरुणदेहचंद्रौ हिना नवा स्याच्च समानमानम् ॥ ६४२ ॥
मुर्दार–संग क्रमुको रसांजनं संचूर्ण्य सिद्धाऽर्थकतैलमिश्रितम् ॥
अस्य प्रलेपाऽणव आशु शीर्षस्फोटस्फुलिंगेषु तुषारविप्रुषः ॥ ६४३ ॥

टीका–अरुणदेहः कांपिल्लः । क्रमुको लोध्रः ॥

मर्हमे–कि सोख्तगी आतश वारूद रोगन् वगैरे
रा जायल् गर्दानद ।
स यथा–

कीर खैर तवाशीर रोगन्कुंजद–योजिताः ॥
प्रलेपादग्निदग्धस्य दाहविस्फोटशांतिदाः ॥ ६४४ ॥

मर्हम्–अवियज–सोजश जराहत रा कमुगर्दानद–क्षतदाहहरः
लहम् विरोयानद–मांससंरोहणश्च ।
स यथा–

मोम श्वेतं पंज ५ दिरम् रोगन्गुल् दिग् १०–दिरम् मतम् ॥

अभावे तिलतैलं च सिक्थकं तेन योजयेत् ॥ ६४५ ॥
सुपेदा काशूगरी सप्त ७ दिरम् प्रक्षालितः शुचिः ॥
सर्वमेकत्र संमर्द्याऽनुभूयाद्भिषगुत्तमः ॥ ६४६ ॥

मर्हमे-कि दमाम्बील सर्ता जख्म रा तह्लील दिहद मुदम्मिल् खुश्क गर्दानद्-विस्फोटपृष्ठविस्फोटक्षतशोषणरोपणः ।

स यथा-

सिंदूरं शल्गम तथा रवि १२-निष्कमिते उभे ॥
सिक्थकं कर्षमानं तु जंगार स्यात्तदर्द्धकम् ॥ ६४७ ॥
सुफेदा काशकारी च शिखि ३-टंकप्रमाणतः ॥
तिलतैलं समं सर्वैः संग्राह्यं भिषगुत्तमैः ॥ ६४८ ॥
तैलं पचेदायसभाजने च फेनोद्गमे सिक्थकमाक्षिपेच्च ॥
द्रव्यत्रयं तत्र विमिश्र्य सर्वं संमर्द्य मन्दं शनकैः सुसिद्धम्॥६४९॥
पक्केऽप्यपक्के व्रणजातिभेदेऽनेकानने दाशरथेः शरः स्यात्॥६५०॥

मर्हम् खल्लः । नवीनमांसक्षतरोपणः स्यात् ।

स यथा-

सुर्दारसंग-संपिष्टं माने दश १०-दिरम्-मितम् ॥
रोगन् जेतून सिर्का च किंवा रोगन्जगीर हि ॥
चत्वारिंश ४० दिरम् सर्वं श्लक्ष्णीकृत्य प्रयोजयेत् ॥ ६५१ ॥

इत्येकोनविंशतितमो वर्गः १९.

---

# अथ वर्गो विंशतितमः २०.



## रदीफ-नून ।

नोशदबा-अवलेहविशेषरूपिणी धात्रीफलप्रधाना ।

दीपिनी पाचनी स्वांतहृच्छीर्षद्रविणप्रदा ॥
वर्ण्या सुपुष्टिदा शस्ता ग्रहण्यर्शोविकारहृत् ॥ ६५२ ॥

सा यथा—

गुलाब-पुष्पं रससंख्यया दिरम् पयोद-कूफी-षु दिरम् भवेत्ततः ॥
सुपर्वपुष्पं तगरं च मस्तगी-पत्रं पृथक्स्याद्दिरम- त्रयं पुनः॥६५३॥
कुंकुमं जातिपत्री च प्रत्येकं दिरम-द्वयम् २ ॥
दिरम-द्वयं तवाशीर एलायुग्मं ततः कणा ॥ ६५४ ॥
मांसी मृगमदः शुद्धः क्रमान्निष्कद्वयैककम् १-२ ॥
मिस्काल-दशकं धात्रीफलमार्द्रं समाहरेत् ॥६५५॥
तदभावविशुष्कं हि भावितं पयसा निशि ॥
तुर्यांशं द्विगुणं क्षौद्रं कंदं तत्र क्रमात्क्षिपेत् ॥ ६५६ ॥
लेह्यः संसाधितः सायं प्रातः मिस्काल-मानतः ॥
संसेवितः परः पुंसा च्यवनप्राश्यसन्निभः ॥ ६५७ ॥

नकूय-मेवेतर-फलानां हिमविशेषः ।

पित्तज्वरतृषावांतिभ्रांतिशांतिविधायकः ॥
ग्लानिं मदात्ययं सद्यः प्रत्ययेनात्ययं नयेत् ॥ ६५८ ॥

स यथा-

तमर् हिंदी तथा आलू बुखारा च पृथक्पृथक् ॥
दिरम् पंचदश १५ ग्राह्यं किशता तुर्श दिरम् १० दश ६५९॥

उन्नाब सरपिस्तां च प्रत्येकं सी ३ अदद स्युः ॥
बनफ्शा कासनी चेति उभे स्तो दिरम ३–त्रयम् ॥६६०॥
समस्तं भावितं नीरे पर्य्याप्तेऽहर्निशं ततः ॥
तुरंजवीं सिता शस्वा देया दिरम–विंशतिः २० ॥ ६६१ ॥
दश १० स्याच्छर्करा शोणा सप्त ७ शम्याकसारतः ॥
रोगन्बादाम दिरम–द्वयं २ तत्र विनिक्षिपेत् ॥ ६६२ ॥
वस्त्रपूतः प्रयोगोऽयं ग्रीष्मे हिततमो हिमः ॥ ६६३ ॥

नकूय हलेलयाः । दर्द सर दमवी सफरावी रा फिलहाल दफे गर्दानद–रक्तपित्तभवशीर्षवेदनाकर्षणो हिततमो हिमो मतः ।

स यथा–

पीता हरीतकी पंचदश १५–संख्या–दिरम्–मिता ॥
आलूबुखारा–स्वरसे भावनीया दिवानिशम् ॥ ६६४ ॥
तुरंजवीं बीस्त २० दिरम् तन्मितं शीरखिष्त च ॥
सिद्धमंशुकसंशुद्धं शिशिरं प्रपिबेन्नरः ॥ ६६५ ॥

नकूये–कि सोजाक बवासीर खूनी इसहाल दमवी इफरात हैज रा फिलवक्त मौकूफ गर्दानद ।

स यथा–

हिना हिंदवा पंकजाऽक्षस्य मज्जाऽभयाऽक्षः शिवांभः समैरेभिरंभः ॥
परूषत्वचा भावितं भूरिवेगं निहन्याद्द्रुतं दुष्ट१सोजाक रोगम् ६६६॥
हिमोऽयमुष्णवातघ्नो रक्ताऽशोर्दलनः सरः ॥
प्रमेहान्विंशतिं हंति प्रदरं तीव्रवेदनम् ॥ ६६७ ॥

टीका–अम्भःशब्देन नेत्रबाला तदभावे हित उशीरः ॥

नक्रूये-कि सुर्जखऽस्त-हिमो भूयिष्ठमनुभूतः ।

स यथा-

जटा वटस्याऽपि सितासमेता हिमीकृआ हृत्कमलस्थदाहम् ॥
हवस्-करी कब्ज-करी विसर्पविस्फोटतृणमेहरुजं हिनस्ति६६८॥

ततूले-कि सुदाय गरम् रा वे ख्वाबी रा जायल् गर्दानद
मुनव्विम्-शक्तिभृद्धारावारि पित्तशिरोऽर्तिहृत् ।

तद्यथा-

तुख्म् काहू बनफ्शा च पृथक् पंज ५ दिरम्-मितम् ॥
पोस्तखश्ख्वाश नीलोफर् बाबूना मुष्टिमानतः ॥ ६६९ ॥
त्रयमेतत्तुषा मुष्टिद्वय २ माना यवोद्भवाः ।
सर्वं प्रस्थत्रये नीरे पक्त्वा तेनांभसा शिरः ॥ ६७० ॥
धारारूपेणाऽभिषिचेत्सद्यः प्रत्ययकारकम् ॥ ६७१ ॥

नतूले-कि सुदाय वारिद रा जायल् गर्दानद-
धारांभःशीतसंभूतशिरोऽर्तिनशनक्षमम् ॥ ६७२ ॥

तद्यथा-

अक्लीलुलमल्क बाबूना ग्राह्यौ मुष्टि १-मितौ पृथक् ॥
शीह शित तथा मर्जंगोश मुष्टयर्द्धमात्रया ॥ ६७३ ॥
सर्वं सम्यक्पचेन्नीरे वह्निना तत आतते ॥
संस्थाप्य तेन शिरसि धारया सिंचनं चरेत् ॥ ६७४ ॥

नतूले-कि जनून वहम् रा दफे गर्दानद दहशत दिल् हम् रफे
गर्दद-चित्तविक्षेपभ्रान्तिभीनिवारणम् ।

तद्यथा-

नीलोफर बनफशा च बेख खत्मी ततः परम् ॥
परावेद चरक्काह तुषा यवसमुद्भवाः ॥ ६७५ ॥

इन्नूब्-शालिब्-पत्राणि खव्वाजी-संभवानि च ॥
सर्वं युक्त्वा पचेन्नीरे तेन क्षालनमाचरेत ॥ ६७६ ॥

नतूले-कि सुदाथरीहि रायजल गर्दानद-

तद्यथा-

अक्लीलुल्मलक बाबूना तथा शिप्त सुदाव च ॥
पुनः कमून किर्म्मानी वजुल्वंज करफस च ॥ ६७७ ॥
समं यथा संभवमम्भसा पचेत्कोष्णेन धारापतितेन मूर्द्धनि ॥
भिषङ् निषिंचेत्पवनोत्थशीर्षव्यथां कथाशेषभृतां चिकीर्षति ॥६७८॥

इति विंशतितमो वर्गः २०.

---

# अथ वर्ग एकविंशतितमः २१.



## रदीफ वाव ।

### वर्द मुरव्वा । गुलकंद-गुलाब ।

मुकव्वी चतुरंगस्य मुलय्यन्-मायुनाशनः ॥
शूलघ्नः शतपुष्पायाः पीतः स्वेदांभसा नृभिः ॥ ६७९ ॥

स यथा-

वृन्तकिंजल्कहीनानि भागैकं कुसुमानि च ॥
कंद-भागद्वयं २ ग्रीष्म आतपे विपचेत्सुधीः ॥ ६८० ॥

वर्द-सत्थं सफर्जल-मुरव्वा गुलकन्द आबी ।

दिल् दमाग जिगर् मादा चतुर्णां द्रविणप्रदः ॥
रेचनं पित्तरक्तोत्थं नाशयेत्सपदि ध्रुवम् ॥ ६८१ ॥

टीका-विधिः प्राग्वत् ॥

वर्द-तुफ्फाह । मुरब्बा-गुलकन्द सेब ।

हरेत्करणशैथिल्यं प्रक्षैण्यं हृत्सरोरुहः ॥
उत्तमांगद्रविणदः पुष्पचापेषुदीपनः ॥ ६८२ ॥

टीका-प्रकारः पूर्ववत् चत्वारिंश ४० दिनानि घर्म्मे काचपात्रस्थ निदध्यात् ।

वर्द-तुर्फा मुरब्बा-गुलकन्द कंजः ।

रक्ताऽतिसारं ग्रहणीं प्रदरं प्लीहवैकृतम् ॥
काबिज् हाबिस् मुजफ्फिफ् च शक्तित्रय ३-परिष्कृतम् ६८३

टीका-सहरेदिति शेष. ॥

वर्द-नसरीन् मुरब्बा-गुलकन्द सेवती । वर्द-यासमीन
मुरब्बा गुलकन्द चंबेली ।

द्वयं श्लेष्मोत्थशीर्षाऽर्ति-लक्वा-फालिज-नाशनम् ॥
भ्रमचित्तभ्रमध्वंसि संहरेत् इरकुन्निसा ॥ ६८४ ॥

वर्द-खियारशवर मुरब्बा गुलकन्द अमलतासः ।

प्रशस्तः शोधने शूलनाशनः परमः सरः ॥
ज्वरघ्नश्च समायुक्तः स्वरूपगुणसंपदा ॥ ६८५ ॥

टीका-एवमेव सिंहीव्याघ्रीतात्रमूलीशखपुष्पीधातकीलोध्रफणिफेनपुष्पाणा च स्वरूपगुण-शक्तिसम्पद्भिः समलङ्कृताः कार्यपरत्वे गुलकन्द-गुलऽगवीं-नामानः क्रियया विधेयाः, विधिः सदृश एव । निदाघघर्म्मे ससिद्धाः आफतावी-प्रसिद्धाः सकेतेन ।

सितासु सिद्धो गुलकन्द-नामा गुलंऽगवीं सारघसिद्धरूपः ॥
पूर्वोऽस्रपित्तोष्मविकारनाशे शस्तः परः श्लेष्मसमीरणघ्नः॥६८६॥

टीका-इति-सामान्योक्तिः, शक्तिः प्रकृतिश्च नानाद्रव्याणां पृथक्तया भिन्नैव प्रकाशमायाति

गुलजार-गुलशन्-मुफ्रिदात-पुष्पैर्मुरक्किवात-प्रचयैः फलोच्चयैः॥
सद्गुम्फना कल्पलताऽभिरामैर्भिषङ्मनोभृंगमुदे भवन्तु ॥ ६८७ ॥

श्रीतांबिकायाः कृपया गुरूणां हिक्मतप्रकाशः सुयशःसुरद्रुः ॥
समर्थनीयो भिषगार्य्यवर्य्यैर्दीपात्मदीपः सुधिया प्रवृत्तः ॥६८८॥
वियद्गृहद्भानुकरींदुसंख्ये श्रीविक्रमाऽऽदित्यनृपेन्द्रवर्षे ॥
पूर्तिं तपःकृष्णशिवे हरौ च यातोऽद्भुतो वैद्यकसारबन्धः ॥६८९॥

इति चिकित्सासारनिबन्धे पारसीप्रतिबिंबो हिक्मत्प्रकाशाऽभिधानो ग्रन्थः संपूर्णः ॥



पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.